श्री भाग० पु० टी० स्कं १०

द्रौणेरस्त्रमस्त्रः ब्रह्मास्त्रेण दग्धं इदं मच्छरीरं कुरूणां पांडवानां च संतानस्य निधाने मम मातुः
कुक्षौ प्रविश्य धृतचक्रः यो जुगोपेति ६ अखिलदेहभाजां सर्वप्राणिनामन्तर्बहिश्च पुरुषरू
पेण कालरूपेणेति अपवर्गप्रायेण बहुवचनं मृत्युं संसारममृतमपि प्रयच्छतो भगवतः
तस्य वीर्याणि कथय यस्त्वं बहिरप्रमेयभावः एतद्यामि रूपेणान्तर्हितो नाम्ना क्षिबहिर्हितो नो कालरू
पेणात्मनेद्ददाति यतस्ततोऽन्तर्हस्यानहीर्याण्यपवर्गेतव्यानीति ७ ननु बलदेवस्य रोहिण्यां भेदवि

द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं संतानबीजं कुरुपांडवानां जुगोप कुक्षिं गत आत्तचक्रो मातु
श्च मे यः शरणं गतायाः ६ वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः प्र
यच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ७ रोहिण्यास्तनयः प्रोक्तो रामः
संकर्षणस्त्वया देवक्या गर्भसंबंधः कुतो देहान्तरं विना ८ कस्मान्मुकुंदो भगवान्पितु
र्गेहाद्व्रजं गतः क्व वासं ज्ञातिभिः सार्धं कृतवान्सात्वतांपतिः ९ ॥ पूर्वं भवन् वसुदे
वस्य रोहिण्येकानासीत् उदपादयदिति रोहिण्यास्तनयो रामः प्रोक्तः वसुदेवस्तु देवक्यां सप्त
पुत्रानजीजनत् कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ऋजुं संमर्दनं चैव संकर्षणमहीश्वरं अ
ष्टमस्तु तयोरासीत्स्वयमेव हरिः किलेति पुनर्देवक्यां गर्भसंबंधः तस्यैवोक्तः स कुतो घटेत इ
त्यपेक्षा कस्मादिति भगवतः कंसभयप्रेरितात्संभवाहित्यर्थः पितुर्गेहाद्वसुदेवगृहाद्व्रजं गोकु

श्री० भा० द० पू० टी० ३

विभोरितिकिंउपस्थितान्तिकेतस्मैव्यसनंसमवोचत १८ हरेराधर्मात्तन्नामसन्तानकेसुखिपिवतिहृषा
कपिः २० पौरुषींपुरुषस्यभगवतोगांवाचंमत्तःमत्तःशृणुतपुनर्विधीयतां आभवति तथैव
विधीयतांचेतिविलम्बनात् २१ पुरैवपुंसाईश्वरेणज्वरःसंतापोवधृतोनिश्चितःसर्वमेवनजानास

गौर्भूत्वाश्रुमुखीखिन्नाक्रंदंतीकरुणंविभोः उपस्थितान्तिकेतस्मैव्यसनंसमवोचत १८
ब्रह्मातदुपधार्याथसहदेवैस्तयासह जगामसत्रिनयनस्तीरंक्षीरपयोनिधेः १९ तत्रग
त्वाजगन्नाथंदेवदेवंवृषाकपिं पुरुषंपुरुषसूक्तेनउपतस्थेसमाहितः २० गिरंसमाधौग
गनेसमीरितांनिशम्यवेधास्त्रिदशानुवाचह गांपौरुषींमेशृणुतामराःपुनर्विधीयता
माशुतथैवमाचिरं २१ पुरैवपुंसावधृतोधराज्वरोभवद्भिरंशैर्यदुषूपजन्यतां सया
वदुर्व्यांभरमीश्वरःस्वयंस्वकालशक्त्याभगवांश्चरेद्भुवि २२ वसुदेवगृहेसाक्षाद्भगवा
न्पुरुषःपरः जनिष्यतेतत्प्रियार्थंसंभवंतुसुरस्त्रियः २३ वासुदेवकलानंतःसह
स्रवदनःस्वराट् अग्रतोभवितादेवोहरेःप्रियचिकीर्षया २४ विष्णोर्मायाभगवती
ययासंमोहितंजगत् आदिष्टाप्रभुणांशेनकार्यार्थेसंभविष्यति २५ ॥

त्वांनोभूम्यावतारेमहद्दुःखायेत्याहुःश्रवणालोकपालानांनोअपीश्वरःस्वस्वरूपकाल
बलात्यावद्भूमिभारंक्षपयन्भगवांश्चरेत् २२ २३ स्वेनात्मस्वरूपेणराजतइतिस्वराट् २४
देवकीगर्भसंकर्षणयशोदामोहनादिकार्यार्थंयशोदायांसंभविष्यति २५ समापनम:

3

मातुर्भ्रातरं कंसं तस्माद्धातार्हं ब्रह्मा मातुरद्धातदवधीत् १० स्पष्टं ११ नन्वत्यन्तं क्षुधापीडितस्य तव
वक्तृत्वश्रावकत्वात्याहनैषेति त्यक्तोदमपि मम जीवनं हरिकथामृतपाननिमित्तं तदपि मे
जीवितमेव सम्यक् न स्यादित्यर्थः १२ भृगुनन्दन शौनक एवं साधुवादं समीचीनं प्रश्नं वैयासकिः

व्रजे वसन्किमकरोन्मधुपुर्यां च केशवः भ्रातरं चावधीत्कंसं मातुरद्धातदर्हणं १० देहं
मानुषमाश्रित्य कति वर्षाणि वृष्णिभिः यदुपुर्यां सहावात्सीत्पत्न्यः कत्यभवन्प्रभोः ११
एतदन्यच्च सर्वं मे मुने कृष्णविचेष्टितं वक्तुमर्हसि सर्वज्ञ श्रद्दधानाय विस्तृतं १२ नै
षातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतं
१३ सूत उवाच एवं निशम्य भृगुनन्दन साधुवादं वैयासकिः स भगवानथ विष्णुरातं २
प्रत्यर्च्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्तुमारभत भागवतप्रधानः १४ शुक उवाच
सम्यग्व्यवसिता बुद्धिस्तव राजर्षिसत्तम वासुदेवकथायां ते यज्जाता नैष्ठिकी मतिः
१५ वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनाति हि वक्तारं पृच्छकं श्रोतॄंस्तत्पादसलि
लं यथा १६ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः आक्रान्ता भूरिभारेण ब्रह्माणं

श्रीशुकः विष्णुरातं परीक्षितं भागवतेषु श्रेष्ठः १४ व्यवसिता कृता निश्चयात्मिका बुद्धिः १५ ।
तत्पादसलिलं गङ्गोदकं तत्र तावत्प्रथमं भगवदवतारकारणमाह भूमिरिति दृप्तनृपव्याजा ये दैत्या
तेषामनेकशतानामयुतैर्यो भूरिभारः तेनाक्रान्ता १७ ॥ ॥

श्री॰ नृशंसेक्रूरेमहाभागइत्ययंभावः स्वजन्मनिहर्षेणादौवेदेवानकदुंदुभिघोषणाभाविभगवदव
भा॰ द॰ तारेणापिक्यप्रतीकारत्वान्मेभवतीतिसांत्वयन्नत्याहकपाविषयत्वोपपत्तिभिश्चसाममार्गेणासं
पू॰ टी॰ त्वयन् ३६ मरणभयेनहन्मीतिचेत्तथापिमरणस्यापरिहार्यत्वान्नाहेत्याहतस्याप्यवधपर्यं
४ विलाप्तथापिचभोगप्रेमास्पदत्वादीनामविरोधात्तन्नभयेनपापाचरणमयुक्तमित्यभिप्रेत्याह दे

तंजुगुप्सितकर्माणंनृशंसंनिरपत्रपं वसुदेवोमहाभागउवाचपरिसांत्वयन् ३६ व
सुदेवउवाच श्लाघनीयगुणःशूरैर्भवान्भोजयशस्करः सकथंभगिनींहन्यात्स्त्रियमु
द्वाहपर्वणि ३७ मृत्युर्जन्मवतांवीरदेहेनसहजायते अद्यवाब्दशतांतेवामृत्युर्वैप्राणि
नांध्रुवः ३८ देहेपंचत्वमापन्नेदेहीकर्मानुगोवशः देहांतरमनुप्राप्यप्राक्तनंत्यजतेव
पुः ३९ यामः

हेनसहेतिविधात्राललाटेलिखितत्वादित्यर्थः तथापिकालविलंबार्थंहन्मीतिचेत्तत्राह अ ॥
द्यवेति अब्दशतभाविनिमरणेविलंबमात्रायपापाचरणमयुक्तमिभावः किंचयस्मिन्देहे
गतेपरदेहांतरेणस्यात्तदाहंस्येतथाप्येनापितत्यालनेनतदस्तीत्याह ३८ देहेपंचत्वमाप
न्नेप्राप्तप्रायकर्मवशाद्यत्नतपवअप्येदेहांतरंप्राप्यपश्चात्स्वंवपुःत्यजतिअत्रदृष्टांतःव्रज ४

देहस्य पंचत्वमसन्ने पंचस्वगुणेषु मायारचितेषु नानादेहरूपेणारचितेषु देवेन फलाभिसंधिना क-
र्मणा चोदितेषु प्रविशति नानाविकारात्मकं मनो यथा देहेन्द्रियादिरूपं प्रतिपद्यते यावच्च मन ययमा
णाभिनिवेशेन प्राप्तेन तत्र सो देही जायते ननु मनसः कर्मकर्तृत्वान्न देवजायतां न तु कर्तात्मेत्या-
ह प्रपद्यमान इति तद्देवाहमिति प्रपद्यमानः तेन सह जायते इति ननु मन्यमविष्यन्नेव किमपि दे-
हमात्रेण तादात्म्यस्याति स्थिरस्य राजदेहस्यावस्थाया अहन्त्वमप्रतिक्रियते इति चेन्नत्याह ४२ यदा चे

यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप पंचसु गुणेषु मायारचितेषु देह्य-
सौ प्रपद्यमानः सह तेन जायते ४२ ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुग-
तं विभाव्यते सर्वं स्वमायारचितेष्वदेह्यसौ गुणेषु रागानुगतो विमुह्यति ४३ तमः

द्वाभ्यां ज्योतिरादित्यं उदकयुक्तेषु पार्थिवेषु कलशादिषु यद्वा उदकेषु पार्थिवेषु तैलघृतादिषु च प्रतिबि-
म्बेन स्थितं समीरस्य वायोर्वेगमनुगतं कंपादियुक्तं यथा एवं स्वमायारचितेषु गुणेषु देहेषु
सोऽरागेणानुगतः प्रविष्टो मुह्यति अभिनिवेशं प्राप्नोति अयं भावः आत्मनस्तावद्देहाद्यध्या-
सात् जन्मादि सहते न जायते इति तत्त्वान्योन्याध्यासोऽध्यासाद्यदा देहधर्माः कर्तृत्वादयश्चात्म-
नि प्रतीयते एवमात्मधर्मस्य स्वप्रकाशत्वादयोऽपि देहादिषु इति राजसस्य करदेहयोर्वि-
वेकाभावात्तद्वत्स्मृत्यप्रतीकारः इति ४३ ॥ तमः

पक्षेनाग्रतो निहितेन पदा तिष्ठन् भुवमवष्टभ्य पश्चादन्येन पूर्वप्रदेशादुत्थाय पश्चान्निहितेन पदा
गच्छति तद्वत् अत्र च स्वीकारपरित्यागौ नात्यन्तभिन्नविषयाविति स्पष्टं दृष्टान्तरमाह यथा तृण
जलौकेति साहित्तृणान्तरमवष्टभ्य पूर्वं तृणं त्यजति यथैवं कर्मणा प्रवर्तमानो न्योगीवोपि ४ दे
ह विषयावेव स्वीकारपरित्यागौ दर्शयितुं दृष्टान्तान्तरमाह ४ः दृष्टो राजादिदर्शनेन श्रुतमिन्द्रा
दिश्रवणेन ताभ्यामाहितसंस्कारेण मनसा तदेवानुचिन्तयन् देहयोगाग्रहस्पृहाप्रस्तरणे दे
राजादिरूपं किमपि प्रतिकर्तोपपद्यते तेन तद्देचादेवाहमिति प्रपद्यते मन्यते न तत्र मात्र

व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति यथा तृणजलौकैवं देही कर्मगतिं गतः ४०
स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः दृष्टश्रुताभ्यां मनसानु
चिन्तयन्प्रपद्यते तत्किमपि ह्यपस्मृतिः ४१ ॥ रामाय नमः ॥

देहादपगतस्मृतिर्भवति पूर्वदेहयोगेन योग्यतिमात्रत्येवं दृष्टान्तं दर्शयितुमाह मनोरथेनेति अत्रा
पि दृष्टश्रुताभ्यामित्यादि योजना प्राकवत्पति जन्तोर्दैवकस्य विदेहतामेत्युत्तरं तत विस्मृतिः
जन्मत्वात्मनया पुंसः सर्वभावेन भूरिद विषयस्वीकृतिं प्राकुर्यथा तस्य मनोरथो स्वप्नम
नोरथे चेतन्मात्तनेनमस्तत्यमावित्यादि तद्वद्यापि कर्मवशाद्देहान्तरप्राप्तौ पूर्वज्ञानं तस्य
नीतिनतत्वविचित्रदेहहेतुर्लोककर्मणाकृतत्वात् देहविशेषप्राप्तौ किं कारणमत आह ४२

श्री॰
भा॰ द॰
पू॰ टी॰
६

यदि वा हन्ता भविष्यति तदा वा येनैव मन्त्रणादेवास्य मरणमिति विपर्ययो वा किं न स्यात् मन्त्रो
च्चारकस्य तत्तद्वालकालाकान्तेऽस्मिन् ततः स्यादित्यत आह गतिरिति धातुः अस्यास्त्वामष्टमो ग
र्भो हन्तेत्युक्तवतो वचनोक्तवतः अत इदानीमपत्यार्पणप्रतिज्ञैवमेव तथापि तदुपस्थितो मृ
त्युरयं निवर्तेत तावत् निवृत्तः पुनः कालान्तरेणापत्यदानेन नापतेत् मे मम न व्यर्थः अथवा समस्तरा
दुपस्थितो मृत्युः अस्यावधानो निवर्तेत पुनरनेन मरणं भवेदिति यद्यागतिर्धातुरीश्वरस्य एतस्य

विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया । उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ५०
अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति । एवं हि जन्तोरपि दुर्विभाव्यः
शरीरसंयोगवियोगहेतुः ५१ एवं विमृश्य तं पापं यावदात्मनिदर्शनम् । पूजयामास
वै शौरिर्बहुमानपुरःसरं ५२ विकसद्वदनाम्भोजो नृशंसं निरपत्रपं । मनसा दूयमानेन
प्रहसन्निदमब्रवीत् ५३ ॥

अपेक्षोपस्थित इति ५० प्राणिनो अदृष्टं दुर्वितर्क्यमिति सदृ
ष्टान्तमाह अग्नेरिति ५१ वने सदा अदह्यन्वह्निः सन्निहितानपि दारून्न दहत्यन्यत्र कदाचिद्दूर
स्थानपि दहति ग्रामेषु गृहान्वा इत्यस्य प्रमाणमदृष्टव्यतिरेकेण किंचिन्नियामकमस्ति यथा एवं
जन्तोर्जन्ममरणयोरपि हेतुर्दुर्विभाव्योऽचिन्त्यः ५२ यावदात्मनिदर्शनं स्वप्रतिज्ञापरिपाला
र्थं तस्य विश्वासाय विकसितवदनाम्भोजः प्रहसन्नब्रवीत् ५३ ॥

6

६

यथा अग्नेर्दारुणीवागाहृत्तस्यानिश्चितं अस्याः सकाशान्न भयेनास्ति यतो येभ्यः पुत्रेभ्यः ते भयमस्त्य
त्रेष्टमोऽहं तेभ्यो ऽन्योन्यापेतयामेवं ग्रहणमाभवे पुरीति तत्त्ववत्त्रान्तमर्पयिष्ये तेनास्याः ५४
निवृत्ते निवृत्तः तद्वाक्ये मासुपपत्तिः तद्वित् ५५ प्रसूतिकाले प्राप्ते सर्वात्मा भगवानेव देवता य
स्याः स्मात्तथा सर्वदेवतामयीति वा भगवदाश्रयत्वात् ५६ मृत्यवे पुत्रैकस्य समर्पितत्वान्नित्यपेतया या

वसुदेवः न चास्यास्ते भयं सौम्य यद्वै प्राहाशरीरवाक् पुत्रान्समर्पयिष्येऽस्या यतस्ते भय
मागतं ५४ शुक उवाच स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् वसुदेवोऽपि तं प्री
तः प्रशम्य प्राविशद्गृहं ५५ अथ काल उपावृत्ते देवकी सर्वदेवता पुत्रान्प्रसुषुवे चा
ष्टौ कन्यां चैवानुवत्सरं ५६ कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः अर्पयामास कृ
च्छ्रेण सोऽनृतादतिविह्वलः ५७ किं दुःसहं नु साधूनां विदुषां किमपेक्षितं किमका
र्यं कदर्याणां दुस्त्यजं किं धृतात्मनां ५८ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिं कंस
स्तुष्टमना राजन्प्रहसन्निदमब्रवीत् ५९ कंस उवाच प्रतियातु कुमारोऽयं न ह्यस्मादस्ति
मे भयं अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ६० तथेति सुतमादाय ययावानक

माह ५७ साधूनां सत्यसंधानां पुत्रलालनसुखापेक्षाकथं त्यक्तेति अत आह विदुषामिति भग
वानेव तत्त्वेनान्यद्धितिज्ञानतामित्यर्थः ननु स्वयं नीतः कंसो बालं न हन्यादिति मत्वा नीतवानि
ति किं न स्यात् अत्रैत्याह किमकार्यमिति ननु देवकीपुत्रैकपुत्रं त्यक्ता तत्र आह दुस्त्यजमिति

सर्वान्पुत्रादीन्कामयन्ते येते षां वराणां ईश्वरी सर्वकामानां सर्वेषां कामवराणां प्रदात्री
ति यान्ता ११ तद्धि क्रमेणार्चनस्थानभेदेनाह १२ गर्भसंकर्षणादित्यादिना त्वयासं
क्षेपेणा गर्भणो तिसंकर्षणात् रामेति संबोधने क्रियते तिलोकस्य रमणाद् स्मन्यादनात् १४ तथे

अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीं धूपोपहारबलिभिः सर्वकामवरप्रदां ११ ना
मधेयानि कुर्वन्ति स्थानानि च नरा भुवि दुर्गेति भद्रकालीति विजया वैष्णवीति च १२ कुमु
दा चण्डिका कृष्णा माधवी कन्यकेति च माया नारायणीशानी शारदेत्यम्बिकेति च १३ ग
र्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि रामेति लोकरमणाद्बलभद्रं बलोच्छ्रयात् १४ सं
दिष्टैवं भगवता तथेत्योमिति तद्वचः प्रतिगृह्य परिक्रम्य गां गता तत्तथाकरोत् १५ ग
र्भे प्रणीते देवक्या रोहिणीं देवमायया अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः १६ भ
गवानपि विश्वात्मा भक्तानामभयंकरः आविवेशांशभागेन मन आनकदुन्दुभेः १७ स
बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः दुरासदोतिदुर्धर्षो भूतानां संबभूव ह १८ ता सः

तिप्रन रपिओमित्यादरेणा प्रतिगृह्य गां पृथ्वीं गता सती तत्तथैवाकरोत् १५ विस्रंसितो विस्रस्तः
च्युत इति विचुक्रुशुः न वत हीद्धृतमित्यर्थः १६ मनसा आविवेश मनस्याविर्बभूव १७ धाम मूर्तिः

मेम याज्ञिकरणीयेनन्तुमेति मामादयतुपानेतिस्वयमेवाह अथ मय्यानीतेशे देवकार्यप्रधानो
विक्रमेण विहृतिर्युक्तिमदृपेणाक्रममेकरिष्यन्ति वन्यर्थः मन्नातर्हि इदानीमेव हन्यतामिति विचा
रित्याह अथ तत्रापि त्रमा त्विक्रमेण विहृतिननाणयति स्त्रीवधेन त्राणः स्यादिति भावः तदेवा
ह स्त्रियहृतिगृहमन्यागमिर्योः २२ किंच सजीवन्नपि मृतः स्यात् तृणामिति न क्रीयेन योव
नेतेति जीवेत्त मेव मनुजाः या पातिङ्थोकोपिक्रुर्वतिमकेवलमत्नावत् सर्वदेहेमृतान्तमानिन

किमयतस्मिन्करणीयमाश मे यद्यंते त्रानविहृतिपोमृषे स्त्रियः स्वमृर्ग्न हमन्यावयो
र्यपणः श्रियहृत्य तुहृत्कलमाशुः २२ मयमजीवन्वल्नसपोनेतावर्ततयात्येतन्त्वामि
नेन देहेमृतेनमनुजाः पापतिगंताननमोयेनतुमानिनाभवे २३ इतिचोगनमान्नाबाम्य
निहृतः स्वयं प्रभुः आत्मप्रतीतन्तज्जन्महरेर्यगानुबंधकृत् २४ आसीनः सर्वपात्मिह
न्भुंजानः पर्यटन्पिबन् चिंतयानो हृषीकेशमपश्यत्तन्मयंजगत् २५ ब्रह्माभवश्चानी
त्यस्तनिमिर्नीरदाहिर्भिः देवैः सानुचरैः साकं गीर्भिर्हरिषणमेडयन् २६ पापिनो नरके या

क्षेति अथ पापापयकारमेवाह नत्तमानिनोस्पदेहे मृतेभवे सेयेन मोगमिष्यतीति २७
से हिणतुणयानः २८ प्रतिजज्ञे सत्यकृतमिति हृष्टः सत्यतेनेव तेश्रपमेस्तवेनिसत्यव्रत
मिति सत्यव्रतसंकल्पाय स्वतंतस्या मत्यपरे मत्येत्रष्टश्रामि साधनेयस्मिन् तेविसत्यविष्ठलो
केष्टस्तष्टेः सर्वप्रलयांतरेच स्थितिमम येच सत्यप्रत्यभिज्ञारणावर्तमानेतदेवाह सत्यस्या

जगतो मूर्तिमंगले अच्युतांशं च्युतिरहिता श्रेयायेश्वर्यादियोगस्यतं यथा अच्युतस्यैवायोभक्ता
नामनुग्रहाय परिछिन्नवपुरित्यर्थः समाहितं सम्यग्भूतमिवाहितं वेददीक्षया ।९। तं देवी चोत्तमा
नामगृहमेत्यर्थः सर्वात्मके सर्वस्यात्मानमतएवात्मभूतं स्वकिञ्चिदाद्यावेदयेत मनन्तो मनसैव
दधार धारयामास ततवती अजानुरूपे दृशी तमाह यथाकाशं प्राचीदिक् आनंदकरं चेदं १९ स

ततो जगन्मंगलमच्युतांशं समाहितं शूरसुतेन देवी दधार सर्वात्मकमात्मभूतं काष्ठा
यथानन्दकरं मनस्तः १९ सा देवकी सर्वजगन्निवासनिवासभूता नितरां न रेजे भोजेन्द्र
गेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती २० तां वीक्ष्य कंसः प्रभयाजितान्तरां
विरोचयन्तीं भवनं शुचिस्मिताम् आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रितो यन्न पुरेयमीदृ
शी २१ ॥

वं जगन्निवासस्य निवासभूतासत्यपि नितरां न रेजे नाज्ञासिकदानैरेजे किं तस्य यमेवानंद
मत्वमभवत् यतः कंसस्य गेहे रुद्धाग्नेर्न्यनेह यथा ते घटादि भ्रमहा अग्निशिखा दीपरक्षता
सती शोभमाना सरस्वती ज्ञानखले ज्ञानवञ्चके रुद्धा यथान्येषामनुपकारिणी न राजते तत
द्वत् २० प्रभया भवनं विरोचयन्तीं अजितो विष्णुः कुक्षिमध्ये यस्याः तां पश्य विरोचमानो अ
वं हरि विश्रयतः यस्मात् ईदृशी पूर्वं नासीत् २१ ॥

एवंरूपस्य संसारवृक्षस्य सतः कार्यस्य त्वमेक एव प्रसूतिः प्रकर्षेण सूतिर्जन्म यस्मात्स कारणं कार्यमित्यर्थः त्वं सन्निधानं सम्यङ्निधीयतेऽस्मिन्निति सन्निधानं लयस्थानं त्वमेवानुग्रहश्च अनुगृह्णातीति पालक इत्यर्थः ननु ब्रह्मविष्णुरुद्राः एवंभूताः प्रसिद्धाः कथमहमिति चेत्तत्राहुः त्वन्मायया संवृतं विहितं चेतः ज्ञानं येषां ते त्वामेव नाना पश्यन्ति ये विपश्चितो विद्वांसः ते तथा न पश्यन्ति २९ ननु देवकीगर्भे मां कथं वर्णयथेति तत्राहुः अवबोधैकसद्रूप आत्मा त्वं रूपाणि मूर्तीर्बिभर्षि पत्नेन न केवलस्यापितुर्गर्भ इत्यर्थः क्षेमाय पालनाय सतां

त्वमेक एवास्य सतः प्रसूतिः त्वं सन्निधानं त्वमनुग्रहश्च त्वन्माययासंवृतचेतसस्त्वां
पश्यन्ति नाना न विपश्चितो ये २९ बिभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराच
रस्य सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि च नाशकानि ३० त्वय्यम्बुजाक्षाखि
लसत्त्वधाम्नि समाधिनावेशितचेतसैके त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं

धर्मवर्तिनां सुखकारीणि खलानामभद्राणि नाशकानि न केवलमेतावत् भक्तानां मोक्षार्थमपीत्याहुः ३० त्वयि समाधिनावेशितचेतसा इति मिलितेन त्वत्पादपोतेनाश्रितेन एके विवेकिनः महद्भिः कृतेन सम्यक्तया संपादितेन पञ्चाब्दमपि मायामयमित्यनादरणीयमित्युत्पदमेव महत्सर्वोत्कृष्टमिति मनसिकृतेन त्वद्भक्तेनेत्यर्थः भवाब्धिं वत्सं कुर्वन्ति अनायासेनैव भजनात् विषादिते न तेषां मुक्तिरित्यर्थः ३१ ॥

श्री· भा·टी· स्क·१०·

११

विनायका विघ्नहेतवः तेषामनीकानि सैन्यानि तानि पान्ति ये तेषां मूर्धसु विचरन्ति अविशङ्कानमयो
तीत्यर्थः सत्त्वं स्वबोधकानि रूपाणि धारयसीत्युक्तं बिभर्षि रूपाणीति ऽनेन प्रकारेण स्वबोध
कत्वमित्यभिप्रायेणाहुः ३४ सत्त्वं श्रयते भवानित्यन्वयः श्रेयउपायनं कर्मफलदातृत्व

तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः त्वया
भिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ३४ सत्त्वं वि
शुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेयउपायनं वपुः वेदक्रियायो
गतपःसमाधिभिः तवार्हणं येन जनः समीहते ३५ ॥ यमः ॥

येन वपुषा जनः तवार्हणं पूजां समीहते करोति कैः वेदश्च क्रियायोगश्च तपश्च समाधि
श्चैतैः चतुराश्रमधर्मैरित्यर्थः वपुषो नाश्रयणे ऽर्हणासंभवात् कर्म
फलसंभवसिद्धिः स्यादिति ३५ ॥

ननु योगेन चेत्सर्वे पारं गताः तर्हीदानींतनानां का गतिः तत्राहुः स्वयमिति हे द्युमन् स्वप्रकाशात्म
न् यत् योगसामीप्यमात्रेण भवोदधिर्वत्सपदमात्रेणानेन ततः तत्र पदस्वयमेवान्येषां भीतिहरम्
र समपि भवार्णवं समुत्तीर्य भवत्पदाम्भोरुहरूपां नावमत्रैव विधाय भक्तिमार्गं संप्रदायप्रवर्त्तनेन
पूर्णः पारं याताः ततः किं यतः अदभ्रसौहृदाः सर्वभूतेष्वतिप्रीतियुक्ताः अत्र तत्ते यो चरणावतिधाय या
ति कथं सत्यादाश्रयमात्रेण तीर्णाः अतः उक्ते भवान् सदनुग्रहः सतो भक्तान् अनुगृह्णातीति ३१

स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीमम् अदभ्रसौहृदाः भवत्पदाम्भोरुहनावमत्र
ते निधाय याताः सदनुग्रहो भवान् ३२ येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभा
वादविशुद्धबुद्धयः आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः ३३ ॥

ननु विवेकिनां मद्भजनेन किं मुक्ता एव हि ते तत्राहुः विमुक्तमानिनमिति मन्यमानास्त्वयि अस्तो
निरस्तो भावो यैस्तथा सत्याभावस्तस्मात् भक्तेरभावादित्यर्थः अविशुद्धबुद्धिर्येषां ते तथा पदं तत्त्वा
ख्यं तस्याभावः सिद्धेः अस्तभावस्य मतं यः स्यादेव विशुद्धबुद्धयश्चेते कृच्छ्रेण बहुजन्मतपसा प
रं पदं मोक्षं सन्निहितं सत्कुलतपःश्रुतादिभ्यः प्राप्य अधः पतन्ति विघ्नैरभिभूयते न प्राप्नुवन्ति यु
ष्मदङ्घ्रीन्नदी पारं न कदाचित्पतन्तीत्याहुः ३३ ॥ ॥

एवेतावद्भक्तानामभ्युदयाय वर्णाश्चैरूपाणि निमित्तश्रीकृष्णस्तान्यपि भजनीयानि केवलेन तस्मा
त्पूर्वोक्तस्तेऽनन्तत्वाद्गुणकर्मत्वाच्चेति मनोवचसोर्गोचरत्वादित्याहुः नानामरूपेति गुणज
न्मानि कर्माणि च ते निरूपितान्यनिरूपणार्हेन भवतः कुतः अनुमेयवर्त्मा गौयस्येति वेति त
त्रापि हेतुः तस्य साक्षिणः तेन हि साक्षिणस्त्वं मनोवचोगोचरः तथापि हे देव बहुधा ध्यानमाने

न नाम रूपे गुणकर्मजन्मभिर्निरूपितव्ये भवतोऽस्य साक्षिणः मनोवचोभ्यामनुमेयव
र्त्मनो देव क्रियायां प्रतियन्त्यथापि हि ३६ शृण्वन् गृणन् संस्मरयंश्च चिन्तयन्नामानि
रूपाणि च मङ्गलानि ते क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते
३७ दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतः तव जन्मनेशितुः दिष्ट्याङ्कितां त
त्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकम्पितां ३८ ॥

अथापि क्रियायामुपासनादिकायां त्वां प्रतियन्ति उपासकाः साक्षात्कुर्वन्तीति प्रसिद्धम् ३६ त
स्मात्भक्तैर्वमोक्षस्तु न संशयमिति शृण्वन्निति अन्यानपि संस्मारयन् क्रियासु देवार्चनादिकर्म
सु विशेषतः श्रीकृष्णावतारमिन्द्रादिदिष्ट्येति दिष्ट्या भवेत्तव पदः पादभूताया ईश्वरस्य तव
जन्ममात्रेणापनीतः एवं त्वत्पदकैः कोमलैः पदैः सुशोभनैः वज्राङ्कुशादिशुभ
लक्षणैः गां पृथ्वीं द्यां दिवं च तव तवानुकम्पितां ३८ ॥

12

दशमेद्वितीयः २ तृतीयेतिजन्मयेणासंभूतस्तस्माद्धरिःस्वयं पितृभ्यांसंस्तुतोनीतःप्रियाभीतेन गोकुले १ अथेतिमंगलार्थं यदि यदासर्वगुणोपेतःकालोऽबभूवतदादेवक्यांविष्णुराविरासी त् इत्यनेनाष्टमश्लोकगतेनान्वयःपरमशोभनत्वमेवाह यर्ह्येवेत्यादिना अजनाम्नायणाजन्मय स्यसः अजनजन्माप्रजापतिस्तस्यऋक्षंरोहिणीनक्षत्रमेकंपक्षेभूतेषांतानिऋक्षाणिग्रहाश्विन्यादीनितद्

दशमेब्रह्मादिस्तुतिर्नामद्वितीयः २ शुकउवाच अथसर्वगुणोपेतःकालःपरमशोभ
नः यर्ह्येवाजनजन्मर्क्षंशांतर्क्षग्रहतारकं १ दिशःप्रसेदुर्गगनंनिर्मलोडुगणोदये म
हीमंगलभूयिष्ठपुरग्रामव्रजाकरा २ नद्यःप्रसन्नसलिलाह्रदाजलरुहश्रियः द्वि
जालिकुलसंनादस्तवकावनराजयः ३ ववौवायुःसुखस्पर्शःपुण्यगंधवहःशुचिः अग्नय
श्चद्विजातीनांशांतास्तत्रसमिंधत ४ ॥

ग्रहास्ताराकाश्चयस्मिन्तद्यर्ह्येतिसर्वत्रानुषज्यते १ निर्मलानामुडुगणानामुदयोयस्मिन् तथा मंगलभूयिष्ठाःपुरादयोयस्यांसा २ जलरुहैःश्रीःशोभायेषांतेद्विजालिकुलानांसंनादायेषु तेस्तवकायासांताः ३ समिंधतअसुरागमोऽदृष्टव्याःप्रदक्षिणार्चयःसमैधंतेतिसम्यक्दी प्ताबभूवुरित्यर्थः ४ ॥

विस्मयेनोत्फुल्ले विकसिते लोचने यस्य सः गवामयुतं तद्दानसङ्कल्पाग्रिमस्पर्शनान्मनसा दत्तवा
न् केवलं निगृहीतस्पन्दनात्मा सम्भवान्न स्पर्शं दत्तः कृष्णावतारोत्सवे सद्यस्प्लुतो व्याप्तः स्नातः इति वा
११ कृतधीः शुभबुद्धिः १२ अथमेवस्तुत्यमाः परपरतो परिहास्याह अथ सत्त्वो विदितोसीति कयो

सविस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुन्दुभिस्तदा कृष्णाव
तारोत्सवसम्भ्रमोस्पृशान्मुदाद्विजेभ्योऽयुतमाप्लुतो गवां ११ अथैनमस्तौ
दवधार्य पूरुषं परं नताङ्गः कृतधीः कृताञ्जलिः स्वरोचिषा भारत सूतिका
गृहं विरोचयन्तं गतभीः प्रभाववित् १२ वसुदेव उवाच विदितोसि भवा
न्साक्षात्पुरुषः प्रकृतेः परः केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् १३ ॥

विदितोसि भवान्प्रकृतेः परः पुरुष इति न तु किमत्राश्चर्यं पुरुषस्य प्रकृतेरन्यत्वादेवेत्यत आ
ह साक्षात्स्वरूपतस्तदर्थः न तु अहमत्रिकः पुः प्रत्यक्तत्तदुपलभ्यते किंचित्रमित्यत आह केवले
ति केवलस्वाभासावरभवस्तु आनन्दस्वरूपतावेदकस्वरूपय
स्य सतः किं च सर्वबुद्धिदृक् न केवलं विद्योह
यो भवतीत्यर्थः १३ ॥

ननु देवकीजठरे प्रविष्टस्य मे किमियमतिस्तुतिः क्रियते अत आह स एवेति स एवान्तस्त्वं पूर्व वन देवकीजठरे प्रविष्टस्त्वर्थः ननु विश्वं सृष्ट्वा तदनुप्रविष्टस्य किमेतदद्भुतमत आह स्वप्रकृत्येति स्वमायया सृष्ट्वा तदनु त्वमप्रविष्ट एवेति ननु कथं तर्हि कृत्स्नोच्यते तत्सृष्ट्वा तदेवानुप्राविशदि त्यत आह प्रविष्ट इव भाव्यसे निरूप्यसे अतो न तेवात्स्य रूपे प्रविष्टत्वलक्षणमत्र दृष्टान्तमाह १५ यथेमे ऽविकृता भावा महदादयो यथा तथैव ते सृष्टान विद्यमाना इति ते विकृतैः सहेति नहि विकृतैः

स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकं तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे १४ यथे
मेऽविकृता भावास्तथा ते विकृतैः सह नानावीर्याः पृथग्भूता विराजं जनयन्ति हि १५ स
न्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव प्रागेव विद्यमानत्वान्न तेषामिह संभवः १६ ॥

षोडशभिर्विकारैः सह सन्निपत्य विराजं जनयन्तीत्यन्वयः कुतः प्रत्यादयेति सन्निपतनेन हेतुमर्थं तथा पृथग्भूताः नानावीर्या विशिष्टकार्यसमर्था न भवन्ति अतः १५ सन्निपत्येति एवं सन्निपत्य समुत्पाद्य अनुगताः प्रविष्टा इव दृश्यन्ते महदादयः न पुनः प्रविष्टाः कुतः उत्पत्तेः प्रागेव कारणतया विद्यमानत्वात् न तेषामिह सृष्टे कार्ये पश्चात्संभवः प्रवेशः इत्थं तत्त्वानां तेषां कार्यप्रवेशः कल्प्यते कार्ये च देवाभिन्नस्यात्मनः तज्जायेत इति किं न स्यादिति चेत्तत्राह प्रागेवेति कार्योत्पत्तेः प्रागेव तत्र भूतानामि

श्री॰
भा॰द॰
स्क॰टी॰
१६

एवंभूतस्यैव तव यथा विश्वस्थितिसर्गलयार्थं त्रिगुणावताराः एवं भूभारापनयनार्थमि
तितात्पर्यमित्याह सत्वमिति द्वयेन २० रिरक्षिषुः अवतीर्णोसि कोटिभिर्नवर्णेन यूथपतेः सा

सत्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः सर्गाय रक्तं रजसो
पबृंहितं कृष्णं च वर्णं तमसा जनात्यये २० त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवती
र्णोसि ममाखिलेश्वर राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः
२१ अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाग्रजांस्ते न्यवधीत्सुरेश्वर सते वतारं पुरुषैः
समर्पितं श्रुत्वाधुनैवाभिसरत्युदायुधः २२ शुक उवाच अथैनमात्मजं वीक्ष्य महा
पुरुषलक्षणं देवकी तमुपाधावत्कंसाद्भीता शुचिस्मिता २३ रामः ॥

नौ गृहेऽवतीर्णोसि राजन्यसंज्ञा असुरकोटियूथपाः तैर्निर्व्यूह्यमाना इतस्ततश्चाल्यमानाश्च
मूः सेनाः निहनिष्यसे संहरिष्यसि २१ किन्तु तत्र प्रसङ्गेन तव पानं भाव्यमित्याह अयन्त्वि
ति असभ्यः खलः समर्पितं कथितं अभिसरति आगमिष्यति २२ उपाधावत् अस्तौत् २३ १६

16

नन्वेतद्धेतुचतुष्टयं प्रपंचस्यावस्तुत्वे घटेत तत्तु न संभवति सत्यत्वेन प्रतीतेरित्याशंक्याह आ त्मनो दृश्यगुणेषु देहादिषु स्वव्यतिरेकतः आत्मव्यतिरेकेण पृथक् सन्नयं देहादिरिति व्यवसा मिति निश्चितवान् यः विनानुवादं वाचारंभणमात्रं विना सम्यक् न भवति अतो वस्तुत्वेनान्यथैवा नुमानात् स अबुधः अविद्वान् व्यतिरेकदर्शनात् किंच मनीषितं विचारितं स देहादि सर्वं यतः त्यक्तं वस्तुबुद्ध्या उपाददत् स्वीकुर्वन् अबुध इत्यर्थः १८ एवं परमेश्वरस्य प्रपंचस्य तद्व्यतिरेकेण सत्त्वमा

य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः । विनानुवादं न च तन्मनी षितं सम्यग्यतस्त्यक्तमुपाददत्पुमान् १८ त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो वदन्त्य नीहादगुणादविक्रियात् । त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः १९ ॥

कं परमेश्वरोपादानत्वादपि तद्व्यतिरेकेण सत्त्वमित्याह नन्वेवं सत्यपि विकारित्वमित्याशं क्याह अनीहादिति अगुणत्वादनीहत्वं ततोऽविकारित्वमित्यर्थः ननु त्वमीहते कथं कर्तृत्वं क र्तृत्वे वा कुतोऽविकारित्वमित्याशंक्याह ब्रह्मत्वादविकारित्वमीश्वरत्वाच्च कर्तृत्वमनुक्रममिति नन्वेतदपि विरुद्धमित्याह त्वदाश्रयत्वादिति गुणैः कर्तृभिः त्वयि तत्स्थादिकर्तृत्वमुपचर्यते गुणाश्रयत्वात् यथा भृत्यकृतं राजनीति १८ १९ ॥

किंच महाप्रलयेप्यवशिष्यमाणमात्मानमाह नष्ट इति लोके चराचरेषु महाभूतेषु
लीनेषु तेष्वपि आदिभूतं भूतस्य सूक्ष्मं तमसि प्रलीनेषु व्यक्ते प्रधाने प्राप्ते अव्यक्ते प्र
धाने सेतोः प्रलयस्य पदमपि लीनमिदमखिलं वेदनीयमिति सर्वशेष्यसंज्ञः शेषसंज्ञ इति
वा २५ किंच यद्वे प्रलयहेतुर्योयं कालः हे अव्यक्तबन्धो प्रकृतिप्रवर्तक तस्य प्रलयाद्या

नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः
शिष्यते शेषसंज्ञः २५ योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वं निमे
षादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये २६ मर्त्यो मृत्युव्यालभीतः पलाय
न्सर्वाँल्लोकान्निर्भयं नाभिगच्छत् त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मा
दपैति २७ स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान्भृत्यवित्रासहासि रूपं चेदं
पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः २८ ॥ रामः ॥

निभूतस्य ते तव चेष्टां लीलां चेष्टते विपरिवर्तते पुनः पुनर्वत्सरान्तो महीयान्द्विपरार्धरूपः
यस्य तस्य चेष्टामाहुः तं त्वां ते क्षेमधाम अभयस्थानं प्रपद्ये शरणं व्रजे २६ क्षेमधामत्वमेवाह
मर्त्य इति लोकान्सर्वान् निर्भयं पदं प्राप्य यदृच्छया केनापि भाग्योदयेन हे अद्य प्रसन्नस्तु वित्ता
पयति सत्वमिति २७ भृत्यानां वित्रासं हन्तीति भृत्यवित्रासहा असि इति वाक्छेदः पौरुषं ध्यानधिष्ण्यं

त्वयि भयं कैव नास्तीति श्लोकचतुष्टयेनाह देवकी किंचिद्विज्ञापयितुं रूपमिति यत्तत्किम
पि रूपं यत्तत्प्राहुर्वेदाः किं तद्वस्तु तदाह अव्यक्तं अत्र हेतुः आद्यं कारणं किं परमाणवः न ब्रह्म बृ
हत् किं प्रधानं न ज्योतिः चेतनं किं वैशेषिकाणामिव ज्ञानगुणं किं मीमांसकानामिव ज्ञानपा
रिणामि निर्विकारं किं पुष्करसादीनामिव वर्णाकृतिविशेषेण परिणामि न सत्तामात्रं तर्हि किं सा
मान्येन निर्विशेषं तर्हि किं कारणत्वात्सक्रियं न निरीहं सन्निधानमात्रेण कारणमेवंभूतं कि

रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारं सत्तामात्रं निर्विशेषं निरी
हं स त्वं साक्षाद्विष्णुरध्यात्मदीपः २४ ॥

मपि कार्यकल्पं वस्तु स एव त्वं साक्षाद्विष्णुरिति प्रयोगस्तत्त्वेत्याह अध्यात्मदीपः इति बुद्ध्या
दिकारणसंघातप्रकाशक इत्यर्थः अथवा अव्यक्तेनैकेनापि प्रकारेण व्यञ्जनेऽस्त्वव्यक्तं ।
कथमनन्यत्वात् नावव्यज्यत इत्याह आद्यं सर्वस्य कार्यस्याद्यमनादीत्यर्थः तथा ब्रह्मज्यो
तिर्निर्गुणं निर्विकारमिति चतुर्भिः पदैः रूपेण प्रकाशेन च गुणेन च विकारेण च व्यक्तिं
निराकरोति तथा सत्तामात्रमिति विशेषेण निर्विशेषमिति सामान्येन निरीहमिति क्रियया

तप्यतोःतपआचरतोःईयुर्गतानिमहात्मनोर्मच्चित्तयोः ३६ अमुनावपुषाप्राग्भूतेनाभि।
३७ वरदराट्वरदेषुश्रेष्ठइत्यर्थः तेनमत्कर्तृकेणवारेणमाविर्भाव्येकारणामसक्तकामा।

एवंवांतप्यतोःतीव्रंतपःपरमदुष्करं दिव्यवर्षसहस्राणिद्वादशेयुर्मदात्मनोः ३६
तदावांपरितुष्टोहममुनावपुषानघे तपसाश्रद्धयानित्यंभक्त्याचहृदिभावितः ३७
प्रादुरासंवरदराड्युवयोःकामदित्सया व्रियतांवरइत्युक्तेमादृशोवांवृतःसुतः ३८
अजुष्टग्राम्यविषयावनपत्यौचदंपती नवव्राथेपवर्गंमेमोहितौमममायया ३९
गतेमयियुवांलब्ध्वावरंमत्सदृशंसुतं ग्राम्यान्भोगानभुंजाथांयुवांप्राप्तमनोरथौ ४०
अदृष्ट्वान्यतमंलोकेशीलौदार्यगुणैःसमं अहंसुतोवामभवंपृश्निगर्भइतिश्रुतः ४१ त
योर्वांपुनरेवाहमदित्यामासकश्यपात् उपेंद्रइतिविख्यातोवामनत्वाच्चवामनः ४२
तृतीयेस्मिन्भवेहंवैतेनैववपुषाथवां जातोभूयस्तयोरेवसत्यंमेव्याहृतंसति ४३

स्यादित्सयादातुमिच्छयामादृशोमत्सदृशः ३८ ममतोपियुवांअपवर्गंनवव्राथेनहृतवंतौ
३९ वरंलब्ध्वामयिगतेसतिग्राम्यान्विषयान्भुक्तवंतौ ४० आदित्यांकश्यपाद्धामनआसेति
यत्तदपितद्रूपयोरहमेवपुनरासमित्यर्थः ४२ हेसतिपतिव्रते ४३ रामायनमः



18

दुरत्यया द्वाराः स्वयं व्यवर्यन्त श्रुतिवत् कृष्णे गुणाः छादमसः रवेः निमित्तात् ४८ गंभीरस्तोयौ
घः तस्य जवेन ये ऊर्मयः तैः फेनिलाः फेनवती भयानकैरावर्तानां शतैराकुला श्रियः पतेः सी
तापतेः सिंधुः समुद्र इव ४९ निद्रया जयानिमित्तभूतया ५० प्रतिमुच्य बद्ध्वा पदोः पादयोः

ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्यन्त यथा तमो रवेः ववर्ष पर्जन्य उपांशुगर्जि
तः शेषोऽन्वगाद्वारि निवारयन्फणैः ४८ मघोनि वर्षत्यसकृद्यमानुजा गंभीरतोयौ
घजवोर्मिफेनिला भयानकावर्तशताकुला नदी मार्गं ददौ सिंधुरिव श्रियः पतेः
४९ नंदव्रजं शौरिरुपेत्य तत्र तान्गोपान्प्रसुप्तानुपलभ्य निद्रया सुतं यशोदाशय
ने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ५० देवक्याः शयने न्यस्य वसुदेवोऽथ दा
रिकां प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ५१ यशोदा नंदपत्नी च जातं परमबु
ध्यत न तल्लिंगं परिश्रान्ता निद्रयापगतस्मृतिः ५२ इति दशमे तृतीयः ३ श्रीशुक उवाच ब
हिरन्तःपुरद्वारः सर्वाः पूर्ववदावृताः ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः
१॥ ग्रामः

लोहं निगडमास्ते स्म ५१ जातं किंचिदिति केवलमबुध्यत न तु पुत्रः कन्या वेति योगनिद्रया
मोहितेति ५२ दशमे तृतीयः ३ चतुर्थे चण्डिकावाक्यमाकर्ण्यातिभयाकुलो दुर्मंत्रिभि।

प्राक्प्रथमं तावद्दैवेन तद्रूपं मे जन्मेति स्मरणाय ज्ञानाय दर्शितं अन्यथा मर्त्यलिंगेन मनुष्य
शरीरेणाऽमद्भवं मद्विषयं ज्ञानं जन्यते अनेन तरत्वद्दिक्ष्या वालोपि भविष्यामीति भावः ४४
ननु तर्हि प्रसन्नेपि कथमावयोः पुनर्जन्मेति अतः परं न भविष्यतीत्याह युवामिति ४५ यदि
केनापि हि मे पितरौ हि सोऽगोकुले नयथ यशोदायाश्च कन्यामन्मायामानयेति प्रथममेवभगवता

एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे । नान्यथा मद्भवं ज्ञानं मर्त्यलिंगेन जायते ४४
युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् । चिंतयंतौ कृतस्नेहौ यास्येथे मद्गतिं परां
४५ शुक उवाच इत्युक्त्वासीद्धरिस्तूष्णीं भगवानात्ममायया । पित्रोः संपश्यतोः स
द्यो बभूव प्राकृतः शिशुः ४६ ततश्च शौरिर्भगवत्प्रचोदितः सुतं समादाय स सूतिका
गृहात् । यदा बहिर्गंतुमियेष तर्ह्यजा या योगमायाजनि नंदजायया ४७ तया हृत
प्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेष्वपि शायितेष्वथ द्वारश्च सर्वाः पिहिता दुरत्यया बृहत्

प्रणोदितः प्रचोदितो यदा गंतुमैच्छत् तदा प्रजैव या योगमाया सा नंदजायया निमित्तभा
तेन भूतया अजनि जाता प्रबोधितेति वा पाठः ४६ हृताः प्रत्ययाः सर्वा हृत यो येषां आ
पृथक्कृताः प्रत्यया अन्यायश्च सर्वाः हृत यो येषां तायतामपि तथाभूतेषु द्वारपालेषु लोहकी
लशृंखलैः कृतेत्वेन बृहद्भिः कवाटादिभिर्दुरत्ययाः अपि वा ४८ ॥

बहूनामनिकेतनेषुवाराणस्यादिस्थानेषुबहूनामादुर्गाकालीत्यादि १३ परमविस्मिताक
थंदेवीयामान्यथाजातेति १४ हेभामभगिनीभर्तः पुरुषादोराक्षसोयथाआत्मापत्यमेवहिनस्तित
द्वत् १५ जीवन्नपिमृतोऽहं १६ हेमहाभागौस्वकृतंभुञ्जानाःस्वारब्धकर्मभोक्तॄन् किंचजन्तवःप्राणि
नःसदैकत्रनासतेकिन्तुअल्पकालमेवतत्राप्येकत्रनासतेकिन्तुवियुज्यन्तेयतोदैवाधीनाः १७ म

शुकउवाच इतिप्रभाष्यतंदेवीमायाभगवतीभुवि बहूनामनिकेतेषुबहूनामाबभूवह
१३ तयाभिहितमाकर्ण्यकंसःपरमविस्मितः देवकींवसुदेवंचविमुच्यप्रश्रितोऽब्रवीत्
१४ कंसउवाच अहोभगिन्यहोभाममयावांबतपाप्मना पुरुषादइवापत्यंबहवो
हिंसिताःसुताः १५ सत्वहंत्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः कांल्लोकान्वैगमि
ष्यामिब्रह्महेवमृतःश्वसन् १६ दैवमप्यनृतंवक्तिनमर्त्याएवकेवलं यद्विश्रंभादहंपा
पःस्वसुर्निहतवाञ्छिशून् १७ माशोचतंमहाभागावात्मजान्स्वकृतंभुजः जंतवोन
सदैकत्रदैवाधीनाःसहासते १८ भुविभौमानिभूतानियथायान्त्यपयान्तिच नायमा

दानासतइत्यनेनयदुक्तंजन्ममरणादितदपिदेहानामेवनात्मनइत्याहभूतानिदेहाएवयान्ति
अपयान्तिचभवन्तिचनभवन्तिचेत्यर्थः यथाभौमानिघटादीनितद्वदेतेषुभूतेषुजन्मादिभिर्विक्रि
यमाणेष्वपिअयमपरोक्षतयाअनुभूयमानोनात्माविपर्ययंविक्रियांनप्राप्नोतिएकरूपएव
तिष्ठतीत्यर्थः भौमेषुविक्रियमाणेषुयथाभूतस्थिति एवंविचार्यमानेसतिनशोकः अज्ञानतस्तु

स्वपरेतिभिदादर्शने किं भवति तदाह शोकहर्षेति २६ भावैर्देहैर्निमित्तभूतैर्मिथो भावान्देहान्घ्नन्तमा
वमीश्वरं पृथग्दृशो न पश्यन्ति किंत्वहमेव हन्ता हन्येति मन्यन्त इत्यर्थः २७ शुद्धं यथा भवति त

भ्रातुः समनुतप्तस्य क्षान्तरोषा च देवकी व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह २४ वसुदे
व उवाच एवमेतन्महाभाग यथा वदसि देहिनां अज्ञानप्रभवाहंधीः स्वपरेति भिदा य
तः २५ शोकहर्षभयद्वेषलोभमोहमदान्विताः मिथो घ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः
२६ शुक उवाच कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः देवकीवसुदेवाभ्यामनुज्ञा
तोऽविशद्गृहं २७ तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः तेभ्य आचष्ट तत्सर्वं यदुक्तं
योगनिद्रया २८ आकर्ण्य भर्तुर्गदितं तमूचुर्देवशत्रवः देवान्प्रति कृतामर्षा दैतेया
नातिकोविदाः २९ एवं चेत्तर्हि भोजेन्द्र पुरग्रामव्रजादिषु अनिर्दशान्निर्दशांश्च हनिष्या
मोऽद्य वै शिशून् ३० किमुद्यमैः करिष्यन्ति देवाः समरभीरवः नित्यमुद्विग्नमनसो ज्याघो
षैर्धनुषस्तव ३१ अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः जिजीविषव उत्सृज्य पला
यनपरा ययुः ३२ केचित्प्राञ्जलयो भीता न्यस्तशस्त्रा दिवौकसः मुक्तकच्छशिखाः के
चिद्भीताः स्म इति वादिनः ३३ ॥

था २९ नातिकोविदा अदृष्टमात्रमतयः ३० न निर्गतानि दशाहानि येषां तान् अन्यांश्च दशाहा
दूर्ध्वं ३२ अस्यतो विध्यतः बाणान् त्यक्त्वा उत्सृज्य रणं पलायिताः ३३ मुक्तकच्छशिखाः मुक्तकटी

अनेवंविदः एवमज्ञानतः आत्मविपर्ययः देहात्मबुद्धिर्भवति यतो विपर्ययात् भेदो भवति देहाहंकारेण हि आत्मनि परिच्छिन्ने सति अहमहंकारास्पदं भिन्नं भवति यतो भेदात् देहाद्युपाधिदेहे योगो वियोगश्च ततः संसृतिः सा च एवं ऋतेः इति यावत् अज्ञानेन निवर्त्तते इत्यर्थः एवमज्ञप्रकारेण तेन यः अहं त्वां यत्नाच्चातितवान् तस्माज्ज्ञानकृतस्य तन्न पाप्यापादितानपि मा शुचो चेति सोऽवय तितस्मादिति २० अज्ञानादथ एकमेवाहं माहयतः इति कथं तर्हि आत्मत्वात् इह बः तद्द्वयस्य वशा

यस्यानेवंविदो भेदो यत आत्मविपर्ययः देहयोगवियोगौ च संसृतिर्न निवर्तते २१ त
स्माद्भद्रे स्वतनयान्मया व्यापादितानपि मानुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः २२ यो
वद्धतोऽस्मि हन्तास्मीत्यात्मानं मन्यतेऽस्वदृक् तावत्तदभिमान्यज्ञो बाध्यबाधकतामिये
त २३ क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः इत्युक्त्वाश्रुमुखः पादौ श्यालः स्वस्रो
रथाग्रहीत् २४ मोचयामास निगडाद्विश्रब्धः कन्यकागिरा देवकीं वसुदेवं च दर्शयन्

यस्मिन्निति श्रवणमज्ञानमूलमेवेत्याह २१ अस्वदृक् देहाद्यभिमानी तस्य देहस्य हननमात्मनः अभिमन्यमान इत्यर्थः श्यालः कंसः स्वस्रोरिति षष्ठ्येन द्विवचनात् उपपत्त्या मिथुनस्य गृहीतामिथुनलक्षणायदस्य हः तस्यास्य अभिधाने लिंग समवायेन प्राणभृतः पादपतनी तिवहेव कार्यवसुदेवस्य च प्रत्येकं पादमग्रहीदित्यर्थः श्याल इत्यनेन कंसस्य चित्तदैन्याभिधानम् २३ आत्मसौहृदं

आत्मसमीपमागतो मृत्युर्यैर्घातेन केवलं मत्वा विद्वेषो महत्तमामवहेलनः किं तव बहुना यः कार्यं यी
त्याह ४७ इति श्रीभागवते दशमस्कंधे चतुर्थोऽध्यायः ४ पंचमे जातके नंदः सूनोः कृत्वाम

शुक उवाच एवं दुर्मंत्रिभिः कंसः सह संमंत्र्य दुर्मतिः ब्रह्महिंसां हितं मेने कालपाशावृ
तोऽसुरः ४५ संदिश्य साधुलोकस्य कदने कदनप्रियान् कामरूपधरान्दिक्षु दानवान्
गृहमाविशत् ४६ ते वै रजःप्रकृतयस्तमसा मूढचेतसः सतां विद्वेषमाचेरुरारा
दागतमृत्यवः ४७ आयुः श्रियं यशो धर्मं लोकानाशिष एव च हंति श्रेयांसि सर्वाणि
पुंसो महदतिक्रमः ४८ इति श्रीभागवते दशमस्कंधे चतुर्थोऽध्यायः ४ शुक उवा
च नंदस्त्वात्मज उत्पन्ने जाताह्लादो महामनाः आहूय विप्रान्वेदज्ञान्स्नातः शुचिर
लंकृतः १ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्य वै कारयामास विधिवत्पि
तृदेवार्चनं तथा २ धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृते तिलाद्रीन्सप्त रत्नौघ
शातकौंभांबरावृतान् ३ ॥

होत्सवे गत्वा मथुरां प्राप वसुदेवागमोत्सवे महामना उदारचित्तः १ नियुते द्वे लक्षे सम
लंकृते तिलपर्वतान्सप्त प्रादात् कल्पेभूतान् रत्नौघैः रत्नसमूहैः शातकौंभांबरैः स्वर्णमयैरंबरैः



92

आकल्पा अलंकाराः १० नवकुंकुमैर्मुखपंकजे भूतिः श्रीर्यासां ताः बलिभिरुपायनैः ११
सुमृष्टान्युज्ज्वलानि मणिमयानि कुंडलानि निष्काः पदकानि कंठेषु यासां ताश्चित्राम्बराः शिखा
भ्यः च्युतानि माल्यवर्षाणि यासां ताः नंदालयं व्रजतीः व्रजंत्यः पथि विरेजुः सवलयाः केशा

महार्हवस्त्राभरणकंचुकोष्णीषभूषिताः। गोपाः समाययू राजन्नानोपायनपाणयः
९ गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवं आत्मानं भूषयांचक्रुर्वस्त्राकल्पांजना
दिभिः १० नवकुंकुमकिंजल्कमुखपंकजभूतयः बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यः
चलत्कुचाः ११ गोप्यः सुमृष्टमणिकुंडलनिष्ककंठ्यः चित्रांबराः पथि शिखाच्युतमाल्य
वर्षाः नंदालयं सवलया व्रजतीर्विरेजुर्व्यालोलकुंडलपयोधरहारशोभाः १२ ता आशि
षः प्रयुंजानाः चिरं पाहीति बालके हरिद्राचूर्णतैलाद्भिः सिंचंत्यो जनमुज्जगुः १३
अवाद्यंत विचित्राणि वादित्राणि महोत्सवे कृष्णे विश्वेश्वरेऽनंते नंदस्य व्रजमागते १४
गोपाः परस्परं हृष्टा दधिक्षीरघृतांबुभिः आसिंचंतो विलिंपंतो नवनीतैश्च चिक्षिपुः
१५ नंदो महामनास्तेभ्यो वासोऽलंकारगोधनं सूतमागधवंदिभ्यो येऽन्ये विद्योप
जीविनः १६ ॥

भूषिताः व्यालोलैः चंचलकुंडलादिभिः शोभा यासां ताः १२ जनं सिंचंत्यः संतः जनमुज्जगुरि
ति वा १३ तेभ्यो गोपेभ्यः प्रादात् १५ यथोचितमन्यानपि समसृजयत् १६ ॥





23

द्रव्याणां गोहिरण्यादीनां तन्मध्ये केषांचिद्दानैरेव शुद्धिर्यथा तत्पादानादिकं जातकर्मादिसंस्का-
रैश्च गर्भाणां शुद्धिरिति तदर्थं चित्तं प्रतिनियतानि शोधनानि रहस्यानि तेनोदाहरति कालेन भूम्यादि
र्यथा एवं नानास्नानेन ह्रदादिनिर्वर्षणालेपनात् गोभिराक्रमणात्कालाद्भूमिः शुध्यति स्नानेन स्ना-
नेन देहादिः शौचेन मलिनांगादिः संस्कारैर्गर्भादिः तपसेन्द्रियादिः इज्यया ब्राह्मणादिः दानैर्द्र-
व्याणि संतुष्ट्या मनः आत्मा आत्मविद्ययेति ५ सौमङ्गल्यगिरः स्वस्तिवाचका विप्रादयो वदे-

कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया शुध्यन्ति दानैः संतुष्ट्या द्रव्याण्यात्मविद्य-
या ५ सौमङ्गल्यगिरो विप्राः सूतमागधवन्दिनः गायकाश्च जगुर्नेदुर्भेर्यो दुन्दुभयो मु-
हुः ६ व्रजः संमृष्टसंसिक्तद्वाराजिरगृहान्तरः चित्रध्वजपताकास्रक्चैलपल्लवतोरणैः ७
गावो वृषा वत्सतरा हरिद्रातैलरूषिताः विचित्रधातुबर्हस्रग्वस्त्रकाञ्चनमालिनः ८

युः तत्र सूताः पौराणिकाः प्रोक्ताः मागधा वंशशंसकाः वंदिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्त-
यः ६ संमृष्टानि संसिक्तानि द्वाराणि अजिराणि अंगनानि गृहान्तराणि गृहमध्यानि च यस्मि-
न्स तथा चित्रध्वजैः पताकाभिः स्रग्भिः चैलैः तोरणैश्च भूषितः ७ हरिद्रातैलरूषिताः विचित्र-
धातवश्च बर्हाश्च स्रजश्च वस्त्राणि च काञ्चनमाला अलंकाराः तद्यया विद्यन्ते येषां ते तथाभूता गावादि

श्री॰
भा॰द॰
सू॰टी॰
२४

कच्चिदिति पशव्यमित्यादिरूपे तस्मिन्वने निर्दोषगोपगोष्ठ्यादिना प्रभूतगोपिकालत्वादि नाथत्रैतेमसविवतयास्मत्कृतिप्रसक्तधीः स्वात्मजयोरिक्तत्वात् २४ स एवास्मदुपलालितः सन्कच्चिद्वर्ततइतियोज्यः पुत्रादर्शनक्लेशेनाहतं संसृति २५ सुहृदो वैधस्मदनुभावित

नैकत्रप्रियसंवासःसुहृदांचित्रकर्मणां ओघेनव्यूह्यमानानांप्लवानांस्रोतसो
यथा २४ कच्चित्पशव्यंनिरुजंभूर्यंबुतृणवीरुधे बृहद्वनंतदधुनायत्रास्सेत्वं
सुहृद्वृत भ्रातर्ममसुतःकच्चिन्मात्रासहभवद्व्रजे तातंभवंतंमन्वानोभवद्भ्यां
मुपलालितः २५ पुंसस्त्रिवर्गोविहितःसुहृदोह्यनुभावितः नतेषुक्लिश्य
मानेषुत्रिवर्गोर्थायकल्पते २६ नंदउवाच अहोतेदेवकीपुत्राःकंसेनबहवो
हताः एकावशिष्टावरजाकन्यासापिदिवंगताः २७

सोपादितः पुंसस्त्रिवर्गः सहितं सोविहितः भुक्तः प्राप्तो भाग्यावाप्तोक्तः न स्वमात्रपर्यवसितं अतस्तेषु क्लिश्यमानेषु सुखायन भवतीत्यर्थः २६ नंदो वसुदेवं सांत्वयन्नाह अहोतेइति कंसचारभयपीडमानः कंसेनोत्तरं दत्वाऽन्यदेवाह २७ ॥

24

श्री· भा·द· स्पी· २२

तथाहि रक्षां तामकुर्वन्नित्याह चक्र्यग्रत इति चक्रसहितो हरिः तवाग्रतो रक्षतु सहगदो गदया सहितो हरिः तव पश्चाद्रक्षतु त्वत्पार्श्वयोर्धनुरसिधारी मधुहा अजनोऽजनश्च समंतात्सर्वतः पुरुषश्च

चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाजनश्च कोणेषु शंख उरु
गाय उपेंद्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समंतात् २४ इंद्रियाणि हृषीकेशः प्राणान्नारा
यणोऽवतु श्वेतद्वीपपतिश्चित्तं मनो योगीश्वरोऽवतु २५ पृश्निगर्भस्तु ते बुद्धिमात्मानं
भगवान्परः क्रीडंतं पातु गोविंदः शयानं पातु माधवः २६ व्रजंतमव्याद्वैकुंठ आसीनं
त्वां श्रियःपतिः भुंजानं यज्ञभुक्पातु सर्वग्रहभयंकरः २७ डाकिन्यो यातुधान्यश्च कुष्मां
डा येऽर्भकग्रहाः भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः २८ कोटरा रेवती ज्येष्ठा पूत
नामातृकादयः उन्मादा ये ह्यपस्मारा देहप्राणेंद्रियद्रुहः २९ स्वप्नदृष्टा महोत्पाता वृद्
धा बालग्रहाश्च ये सर्वे नश्यंतु ते विष्णोर्नामग्रहणभीरवः ३० इति प्रणयबद्धाभिर्गो
पीभिः कृतरक्षणं पाययित्वा स्तनं माता संन्यवेशयदात्मजं ३१ ॥

कोणेषु क्षितौ अधस्तात् २४ एवं बहिरक्षां कृत्वान्तरंगमकुर्वन्नित्याह इंद्रियाणीति २५।
आत्मानमहंकारं २६ सर्वग्रहभयंकरोडः सहपरीवारः २७ संन्यवेशायत् शाययामास ३१

ग्रेषकल्पा विवरा भीरेव अतितीक्ष्णा यस्मिंस्तत् पुलिनवदारोहो नितंबस्तेन भीषणं बद्धाः सेतवो वक्षः
ग्रीवा च यस्मिंस्तत् शून्यतोयह्रदवदुदरं यस्मिंस्तत् १७ पूर्वमेव तस्याः पातेन भीताः पुनर्दर्शनेना
तितरां त्रस्ता इत्याह पूर्वं त्विति तस्या निःस्वनितं पातो ह तेन निर्भिन्नानि हृत्कर्णमस्तकानि येषां ते १८ द्वा
दशांगेषु ललाटादिषु केशवादिद्वादशनामभिः २१ अन्तर्वाधितां प्रथमं मतिसंभ्रमेणावर्तितां अ

ग्रेषकल्पगभीरास्यं पुलिनारोहभीषणं। बद्धसेतुभुजोर्वङ्घ्रिशून्यतोयह्रदोदरं १७ संतप्त
नः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरं। पूर्वं तु तन्निःस्वनितभिन्नहृत्कर्णमस्तकाः १८ बा
ले च तस्या उरसि क्रीडंतमकुतोभयं। गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमाः १९ य
शोदारोहिणीभ्यां ताः समं बालस्य सर्वतः। रक्षां विदधिरे सम्यग्गोपुच्छभ्रमणादिभिः
२० गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकं। रक्षां चक्रुश्च शकृता द्वादशांगेषु नामभिः २१
गोप्यः संस्पृष्टसलिला अंगेषु करयोः पृथक्। न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत
२२ अव्यादजोऽङ्घ्रि मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः। हृत्केशवो

न्नादि किंचिल्लब्धाश्वासाः पुनः तात्पर्येणाबीजन्यासमकुर्वतेत्याह संस्पृष्टसलिला आचांता आत्मा
नि अथ समं अंगेषु करयोः पृथक् अजादय एकादश बीजानां मध्ये करशुद्धौ त्रीणि करयोः शेषाणि अंगे
नीति यो ज्ञातादावेकैकस्मिन्नंगे प्रजापतिबीजं न्यस्य बालस्याप्यंगेषु तथैवाकुर्वत २२ अंघ्रिमणी

पूतनास्तनमोक्षमार्भकचरितमिति किं तत्पूतनामोक्षमिति ४५ इति श्रीभावार्थदीपिका
यां दशमस्कन्धे षष्ठोऽध्यायः ६ उत्तानपत्शकटक्षेपस्तृणावर्तवधः शिशोः दर्शयन्विश्वमा
स्ये च कृष्णः क्रीडति सप्तमे कृष्णार्भकसुधासिन्धुसंप्लवानन्दनिर्भरः भूयस्तदेव संप्रष्टुमा
न्यदभिनन्दति येन मत्स्याद्यवतारेणापि यानि यानि कर्माणि करोति तानि कर्णरम्याणि वक्त

तेन तत्र वर्णितं गोपैः पूतनागमनादिकं श्रुत्वा तन्निधनं स्वस्ति शिशोश्चासन्सुविस्मि
ताः ४३ नन्दः स्वपुत्रमादाय प्रोष्यागतमुदारधीः मूर्ध्न्युपाघ्राय परमां मुदं लेभे कुरू
द्वह ४४ य एतत्पूतनामोक्षं कृष्णस्यार्भकमद्भुतं निशाम्य श्रद्धया चैव गोविन्दे लभ
ते गतिं ४५ अन्तर्दैत्यकुलानीव पूतनायाः पितृकुलात् स्तन्यपानतः प्राणैः
प्राणाहुतिमकल्पयत् ४६ इति श्रीभागवते दशमस्कन्धे षष्ठोऽध्यायः ६ राजोवा
च येन येनावतारेण भगवान्हरिरीश्वरः करोति कर्णरम्याणि मनोज्ञानि नः प्र
भो १ यच्छृण्वतोऽपैत्यरतिर्वितृष्णा सत्त्वं च शुद्ध्यत्यचिरेण पुंसः भक्तिर्हरौ तत्पु

तिमनःप्रीतिकराण्येव भवन्तीति १ तत्रापि यत् शृण्वतः पुंसः पुरुषमात्रस्यारतिः ग्ला
निः तन्मूलभूता च वितृष्णा सा चापगच्छति तथा सत्त्वं शुद्ध्यति हरिभक्तिः हरिदासेषु सख्यं
च भवति तदेव हारं हृद्यं चरितं मनोहरं वा वद यदि मन्यसे श्रवणयोग्यं यदि करोषीति।

विस्मयेनैवाहुर्नूनमिति ३२ बतविस्मये सोऽयं ऋषिः तपःप्रभाववान् योगेशो योगी वा सा
म्यगास यतः स एव दृष्ट इति ३४ विस्मयान्तरमाह कृष्णेन निर्भुक्तो भुक्तस्तत एव सपदि हतान्याहतानि

तावन्नन्दादयो गोपा मथुराया व्रजं गताः विलोक्य पूतनादेहं बभूवुरतिविस्मिताः ३१
नूनं बतर्षिः संजातो योगेशो वा समास सः स एव दृष्टो ह्युत्पातो यदाहानकदुन्दुभिः ३२
कलेवरं परशुभिश्छित्त्वा तत्ते व्रजौकसः दूरे क्षिप्त्वावयवशो न्यदहन् काष्ठवेष्टितं ३४ द
ह्यमानस्य देहस्य धूमश्चागुरुसौरभः उत्थितः कृष्णनिर्भुक्तसपद्याहतपाप्मनः ३५
पूतना लोकबालघ्नी राक्षसी रुधिराशना जिघांसयापि हरये स्तनं दत्त्वाप सद्गतिं ३६ किं
पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने यच्छन् प्रियतमं किं नु रक्तास्तन्मातरो यथा ३७ प
द्भ्यां भक्तहृदिस्थाभ्यां वन्द्याभ्यां लोकवन्दितैः अङ्गं यस्याः समाक्रम्य भगवानपि तत्स्तनं ३८
यातुधान्यपि सा स्वर्गमवाप जननीगतिं कृष्णभुक्तस्तनक्षीराः किमु गावोऽनुमातरः ३९
पयांसि यासामपिबत्पुत्रस्नेहस्नुतान्यलं भगवान् देवकीपुत्रः कैवल्याद्यखिलप्रदः
४० तासामविरतं कृष्णे कुर्वतीनां सुतेक्षणं न पुनः कल्पते राजन् संसारोऽज्ञानसंभवः ४१

नः पाप्मा यस्य सः ३५ प्रसंगाद्भक्तिवैभवं कैमुत्यन्यायेनाह पूतनेति ३६ श्रद्धयास्तिक्ये
न भक्त्या प्रेम्णा रक्ताः स्निग्धाः तन्मातर इति वत्साहरणलीलायां प्रायेणैव कृष्णवचने गोपिकानां

अत्रोत्सवकेन पुनः विपिनहि अयेति तज्जातिं मनुष्यजातिमनुरुन्धतोऽनुकुर्वतः ३ मतिदिवसके उत्थाने पार्श्वपरिवर्तने तत्र करणीये कौतुकाप्लवे उत्सवाभिषेके तथा तस्मिन्नेव दिने जन्मर्क्षस्यापि योगे प्रतिमहोत्सवे सति समवेतयोषितां मिलितस्त्रीणां मध्ये वादित्रादिभिः वादित्राणि च गीतानि च द्विजमन्त्राश्च वाचकाश्च तैः इति शोभितमभिषेचनं कारयामास यशोदा चकार ४ अन्नाद्यैः सुपूजितैर्विप्रैः कृतमंगलस्नानं निद्रामीलिताक्षं यस्य तं तथाभूतं शयने स्थापितवती।

अथान्यदपि कृष्णस्य तोकाचरितमद्भुतं मानुषे लोकमासाद्य तज्जातिमनुरुन्धतः
३ शुक उवाच कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषितां
वादित्रगीतद्विजमन्त्रवाचकैश्चकार सूनोरभिषेचनं सती ४ नन्दस्य पत्नी कृत-
मज्जनादिकं विप्रैः कृतस्वस्त्ययनं सुपूजितैः अन्नाद्यवासःस्रगभीष्टधेनुभिः सञ्जा-
तनिद्राक्षमशीशयच्छनैः ५ औत्थानिकौत्सुक्यमना मनस्विनी समागतान्पूजय-
ती व्रजौकसः नैवाशृणोद्वै रुदितं सुतस्य सा रुदन्स्तनार्थी चरणावुदक्षिपत् ६

शकटस्याधस्तात्स्थितत्वे ५ ऊर्ध्वं चालितवान् ६ तदधःशयानस्य शिशोः अनल्पकश्चासौ प्रवालवन्मृद्वङ्घ्रिश्च तेन हतं शकटं व्यवर्तत विपरीतमपतत् कथंविधं विध्वस्तानि नानारसकुप्यभाजनानि यस्मिंस्तानि नानारसवन्ति सुवर्णरजतातिरिक्तकांस्यादिमयानि भिन्नानि यथा भवति तथा चक्रे चाक्षाश्च चाक्रा विन्यस्ताः चक्राक्षाः यस्मिन् विभिन्नः कूबरो युगन्धरो यस्य तत् तच्च तत् तथा व्यवर्ततेति ६ ॥

इतिश्रीभावार्थदीपिकायांदशमस्कंधेसप्तमोध्यायः ७ अष्टमेनामकर्मास्यबालक्रीडा
कौतूहले सङ्कर्षणाभियोगेचविश्वरूपनिरूप्यते विश्वरूपादिबालस्यलीलास्यापांकितःपि
ता नामकर्मगर्गवाक्येननिजतत्त्वंप्रसूनत्वेन नामकरणंगर्गवाक्येननिजतत्त्वमस्मा
त्स्वपुत्रकदीपकारणोःचेतकश्चेधमिनोत्रहमागतःतत्राहमहद्विचलनमिति महा

इतिश्रीभागवतेदशमस्कंधेसप्तमोध्यायः ७ शुकउवाच गर्गःपुरोहितोराजन्यदू
नांसुमहातपाः व्रजंजगामनंदस्यवसुदेवप्रचोदितः १ तंदृष्ट्वापरमप्रीतःप्र
त्युत्थायकृतांजलिः आनर्चाधोक्षजधियाप्रणिपातपुरःसरं २ सूपविष्टंकृता
तिथ्यंगिरासूनृतयामुनिं नंदयित्वाब्रवीद्ब्रह्मन्पूर्णस्यकरवामकिं ३ महद्विचा
लनंनृणांगृहिणांदीनचेतसां निःश्रेयसायभगवान्कल्पतेनान्यथाक्वचित् ४

तांस्वाश्रमात्स्वतपोवनादन्यत्रविचलनेनस्वार्थंकिंतुगृहिणांमंगलाय नतुतर्हितएवम
हद्दर्शनार्थंकिमितिनागच्छंतितत्राह दीनचेतसांकृपणानांक्षणमपिगृहेत्य
क्तुमशक्नुवतामित्यर्थः ४ ॥

अहोवत्तेतिनिवृत्तिंगमितःमृत्युंप्रापितःकोत्रविस्मयोयुज्यते तेषवकेचिदाहुःहिंस्रइति २१
नोस्माभिःचीर्णंकृतंइष्टंवापीकूपतडागादिनिर्माणंइष्टंपंचयज्ञाग्निहोत्रादिदत्तंदानंयघस्मा

गोप्यश्चगोपाःकिलनंदमुख्यालब्धापिपुनःप्रापुरतीवमोदं २१ अहोवतात्यद्भुतमेषर
क्षसाबालोनिवृत्तिंगमितोभ्यगात्पुनः हिंस्रःस्वपापेनविहिंसितःखलःसाधुःसमत्वेन
भयाद्विमुच्यते २२ किंनस्तपश्चीर्णमधोक्षजार्चनंइष्टंपूर्तदत्तमुतभूतसौहृदम् यत्सं
परेतःपुनरेवबालकोदिष्ट्यास्वबंधून्प्रणयन्नुपस्थितः २३ दृष्ट्वाद्भुतानिबहुशोनंदगो
पोबृहद्वने वसुदेववचोभूयोमानयामासविस्मितः २३ एकदार्भकमादायस्वांका
मारोप्यभामिनी प्रस्नुतंपाययामासस्तनंस्नेहपरिप्लुता २४ पीतप्रायस्यजननीसा
तस्यरुचिरस्मितं मुखंलालयतीराजन्जृंभतोदहृशेइदं २५ खंरोदसीज्योतिर
नीकमाशाःसूर्येंदुवह्निश्वसनांबुधींश्च द्वीपान्नगांस्तद्दुहितॄर्वनानिभूतानियानि
स्थिरजंगमानि २७ सावीक्ष्यविश्वंसहसाराजन्संजातवेपथुः संमील्यमृगशावाक्षी
नेत्रेआसीत्सुविस्मिता २८ ॥

त्तनपश्चादेःप्रणयन् हर्षयन् ३१ संजन्यातास्तुगोकुलेइतिवचनेमानयामास ३२ पीतप्रा



यस्यपीतप्रायःस्तनोयेन २५ नगान्गिरीन्तरूंक्लिष्टान्नदी २६
२७ २८ ॥

श्री० भा० द० टी० ३२

किंसयाहतयासंदेत्यादिदेवकीकन्यावचः अन्यादेवक्याअष्टमोगर्भोनस्त्रीभवितुमर्हती
तिचनिश्चयंसंचिंतयन् मामान्यानकश्चिद्हंतीतिन्यायाद्वयोश्चसख्यंचिंतयन्नंदगृहेभवेदि
तिसंभाव्यमत्संस्कारलिंगेनसागतशंकः आगताशंकायस्यसोपिहंतायदिहनिष्यति
तर्हितत्तदानीमस्माननयःस्यात् ९ द्विजातिसंस्कारंद्विजातीनामवश्यकर्तव्यंसंस्कारमात्रं

इतिसंचिंतयन्छ्रुत्वादेवक्यादारिकावचः अपिहंतागताशंकःतर्हितन्नोनयोमहान्
९ नंदउवाच अलक्षितोस्मिन्रहसिमामकैरपिगोव्रजे कुरुद्विजातिसंस्कारंस्वस्तिवाचन
पूर्वकम् १० शुकउवाच एवंसंप्रार्थितोविप्रःस्वचिकीर्षितमेवतत् चकारनाम
करणंगूढोरहसिबालयोः ११ अयंहिरोहिणीपुत्रोरमयन्सुहृदोगुणैः आख्यास्य
तेरामइतिबलाधिक्याद्बलंविदुः १२ यदूनामपृथग्भावात्संकर्षणमुशंत्युत १३ ॥
आसन्वर्णास्त्रयोह्यस्यगृह्णतोनुयुगंतनूः शुक्लोरक्तस्तथापीतइदानींकृष्णतांगतः ॥

केवलंस्वस्तिवाचनपूर्वंकुर्विति १० यदूनामपृथग्भावात्कृतनाविद्धीनोर्विप्रतिपद्यमानानां
यदूनामपृथग्भावात् भावोभावोनतस्मादन्योन्यापितयासर्वैकमतिकरणादित्यर्थः स
म्यक्कर्षत्येकीकरोतिसंकर्षणमप्युशंतीतिमन्येतीत्यर्थः गर्भसंकर्षणात्तन्नप्रकाशयत्या
तिप्रागयंवसुदेवस्यजातःस्वल्पत्वात्ममनः इतिअस्यतत्तनवत्रयस्यत्तत्त्वःश्रीकृष्णःस्तेत्यपकेना

भा० श्रीधरी ८ ॥



32

त्वया बालयोर्नामकरणादिकं करणीयमिति वक्तुं तस्य ज्ञानातिशयमाह ज्योतिषामयनमिति यदतीन्द्रियज्ञानं साक्षात् ज्योतिषामयनं तत्प्रतिपादकं ज्योतिःशास्त्रमित्यर्थः तत्साक्षाद्भवता प्रणीतं येनान्योऽपि पुमान् परावरं कारणं सर्वं जन्महेतुकर्मप्रवरं कार्यं यदस्मिन् जन्मनि भाविफलं तद्वेद उत्तमं च ज्ञानं किं यदुपचितं मन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिर्व्यञ्जयति या स्त्वमेतत्तमसि द्रव्याणि द्वीयस्त्वेति विवक्षितमाह त्वं हीति ५ देवकीसुतं तन्नामकरण

ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतीन्द्रियम् । प्रणीतं भवता येन पुमान्वेद परावरम् ५
त्वं हि ब्रह्मविदां श्रेष्ठः संस्कारान्कर्तुमर्हसि । बालयोरनयोर्नॄणां जन्मना ब्राह्मणो गुरुः
६ गर्गः यदूनामहमाचार्यः ख्यातश्च भुवि सर्वदा । सुतं मया संस्कृतं ते मन्यते देवकी
सुतं ७ कंसः पापमतिः सख्यं तवानकदुन्दुभेः । देवक्या अष्टमो गर्भो न स्त्री भवितु
मर्हति ८ ॥

दि संस्कारान्कर्तुमर्हसीत्यर्थः नन्वेतत्करणीयं श्रवणेऽनुपयोगान्वयाहनृणामिति ६ प्रत्युत्तरन्ने देवप्रतिश्रमेतत्कार्यमित्यभिप्रायेण श्रन्याचक्षाणः स्याह यदूनामिति भवतस्तथापि स्वमन्त्रागनः तिको विघातः इति चेत् तत्राह ख्यातश्चेति ततः किमत आह सुतमिति कंसो मन्येत अतो कल्पयेदित्यर्थः ७ ननु यदुकुमारः जिकल्पे चिज्ज्ञानात्तत्त्वं वसुदेवस्य पुत्रः तस्यापि देवक्यां जा

अनुकृष्य पुनः पुनराकृष्य सरीसृपंतौ अतिशयेन चलंतौ कथंभूतौ घोषःकटिपादभूषणकिं
किण्यः तेषां प्रघोषेण रुचिरं यथा तथा घोषाणां तेषां नादेन प्रीतमनसौ ययोः तौ लोकं तत
स्ततो गच्छंतमनुसृत्य विचित्रराणि पदानि अनुगम्य मुग्धवत्प्रभीतवच्च मात्रोरंतिके समी
पमुपेयतुर्जग्मतुः २३ तदा च तन्मातरौ निजसुतौ दोर्भ्यामुपगूह्य प्रमोदं ययतुः कथंभूतौ

तावंघ्रियुग्ममनुकृष्य सरीसृपंतौ घोषप्रघोषरुचिरं व्रजकर्दमेषु तन्नादहृष्टमन
सावनुसृत्य लोकं मुग्धप्रभीतवदुपेयतुरंतिमात्रोः २३ तन्मातरौ निजसुतौ घृण
या स्नुवंत्यौ पंकांगरागरुचिरावुपगूह्य दोर्भ्यां दत्वा स्तनं प्रपिबतोः स्म मुखं निरी
क्ष्य मुग्धस्मिताल्पदशनं ययतुः प्रमोदं २४ यर्ह्यंगनादर्शनीयकुमारलीलावंत
र्व्रजे तदबलाः प्रगृहीतपुच्छैः वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षंत्य उज्झितगृ
हा जहृषुर्हसंत्यः ॥ २५ ॥

घृणया कृपया स्नुवंत्यौ पयः स्रवंत्यौ पयोधरे सत्यौ पंकेनांगरागेण च रुचिरौ कथंभूतौ निरीक्ष्य
मुग्धं मंदस्मितं यस्मिन् अल्पदशनानां च यस्मिंस्तच्च २४ यर्हि यदांगनानां दर्शनीयौ कुमार
लीलायोः तौ तथाभूतौ जातौ तदा अंतर्व्रजे व्रजस्य मध्ये तदबला व्रजांगनानाः प्रेक्षंत्यः प्रे
क्षमाणा विस्मृतगृहकार्या हसंत्यो जहृषुर्हर्षो बभूवुः ताभ्यां प्रगृहीतानि पुच्छानि येषां तैर्वत्सै



33

प्रागयमिति स्पान्योक्ताक्षरविरचंजन्मांतरगतंनामकथयतीतिनंदो॰ यतेस्म अतएवं वासुदे वइतिसंप्रचक्षतेइति १४ गुणानुरूपाणिरूपाणिस्वरूपाणि सर्वज्ञत्वादीनिकर्मानुरूपाणिगोपति॰ गो वर्धनोद्धरणादीनिसर्वाण्यहमपिनोवेदजनाअपिनोविदुरिति १५ जातकफलमाह एष इ

प्रागयंवसुदेवस्यजातःखलुतवात्मजः वासुदेवइतिश्रीमानभिज्ञासंप्रचक्षते १४
बहूनिसंतिनामानिरूपाणिचसुतस्यते गुणकर्मानुरूपाणितान्यहंवेदनोजनाः १५
एषवःश्रेयआधास्यन्गोपगोकुलनंदन अनेनसर्वदुर्गाणियूयमंजस्तरिष्यथ १६ पु
रानेनव्रजपतेसाधवोदस्युपीडिताः अराजकेरक्ष्यमाणाजिग्युर्दस्यून्समेधिताः १७ यए
तस्मिन्महाभागाःप्रीतिंकुर्वंतिमानवाः नारयोभिभवंत्येतान्विष्णुपक्षानिवासुराः
१८ तस्मान्नंदात्मजोयंतेनारायणसमोगुणैः श्रियाकीर्त्यानुभावेनगोपायस्वसमाहि
तः १९ इत्यात्मानंसमादिश्यगर्गेचस्वगृहंगते नंदःप्रमुदितोमेनेआत्मानंपूर्णमा
शिषां २० कालेनव्रजताल्पेनगोकुलेरामकेशवौ जानुभ्यांसहपाणिभ्यांरिंगमाणौविजह्रतुः २१ कालेनव्रजताल्पेनगोकुलेरामकेशवौ जानुभ्यांसहपाणिभ्यांरिंगमाणौ

तिआधास्यतआधास्यतिअनेनेन अंजःशीघ्रेण १६ अनेनरक्ष्यमाणाःसमेधिताःसंतःदस्यून्जिग्यु रिति १७ इतिचात्मानंप्रतिसमादिश्यआत्मानंकृतार्थंमानमानिनंपूर्णमाशिषांमानमाशीभिःपूर्णंमेने २०

क्रीडापरावतिचलेतौ शृंग्यादिभ्यो निषेद्धुं गृहे चित्तानि कर्माणि कर्तुं यत्र तदा तज्जनन्यौ न शेका
तेतयोर्मातरौ समर्थे न बभूवतुः तदालं मनसोनवस्थां ग्रस्थितिरापत्तुरिति शृहसो व्यस्यपरा
काष्टा दर्शिता २८ असमये अदोहकाले यया क्रोशेन तर्हि संजातहासः स्तेयं चौर्यार्जितं नव
दत्तं तत्रापि स्वादु नेतरत् दधिचपयश्च अत्ति किंच भोक्ष्यन् मर्कान् मर्कटान् प्रति विभज्य ददाति

शृंग्यग्निदंष्ट्र्यसिजलद्विजकंटकेभ्यः क्रीडापरावतिचलौ स्वसुतौ निषेद्धुं गृह्याणि कर्तु-
मपि यत्र न तज्जनन्यौ शेकात आपतुरलं मनसोनवस्थां २६ कालेनाल्पेन राजर्षे रामः
कृष्णश्च गोकुले अघृष्टजानुभिः पद्भिर्विचक्रमतुरंजसा २७ ततस्तु भगवान्कृष्णो
वयस्यैर्व्रजबालकैः सहरामो व्रजस्त्रीणां चिक्रीडे जनयन्मुदं २८ कृष्णस्य गोप्यो
रुचिरं वीक्ष्य कौमारचापलं शृण्वंत्याः किल तन्मातुरिति होचुः समागताः २९ का
स्वचापल्यचौर्याणि महेवाविलसमतः प्रजल्पंत्यः समागत्य गोप्यो गोपैर्मदंददं
२९ वत्सान्मुंचन्क्वचिदसमये क्रोशसंजातहासः स्तेयं स्वाद्वत्त्यथ दधिपयः कल्पि-
तैः स्तेययोगैः मर्कान्भोक्ष्यन्विभजति सचेन्नात्ति भांडं भिनत्ति द्रव्यालाभे सगृहकुपितो

तेषामर्थे नूनमनेन को पि नास्तीति चेत्तर्हि भांडं भिनत्ति किं च द्रव्यस्यालाभे सति स गृहान् प्रत्याभी
ति एवं कुपितो याति यद्वा मे गृहाणां गृहिणः तेभ्यः कुपितः सन् तोकान्युपंकादि पुनर्मानुपक्रो

श्री°
भा°द°
स्°टी°
३५

एवमेतद्धि चित्रे विश्वे महेन्द्रे देवे वीक्ष्य विस्मितो माह नीवस्य गुणानामक्ताः कालस्य परिणामभेदे
तः स्वभावस्य जन्महेतुः कर्मचत्तत्स्वेकाराः आशयस्य येते लिंगानां चराचरशरीराणां भेदो य
स्मिन्नतत्त्वज्ञेनच महात्मानं स्वमहितेक्षविद्वीक्ष्य मनोऽलनोऽल्पेव विदारिते आत्मपो
कामवाप ४ नामाहकिंस्व मइति परितो विलोक्य विकल्पाह नायं स्वमानर्हि किं

एतद्धि चित्रे सहजीवकालस्वभावकर्माशयलिंगभेदे सतोऽलनो वीक्ष्य विदारि
तास्यअजेसहात्मानमवापयाको ४ किं स्वप्न एतदुतदेवमायाकिंवा मदी
योवतबुद्धिमोहः अथोअमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयो
गः ४२ ॥

विदेवास्य हरेर्मायातत्त्वावेक्षि मन्येन यपपेतित हिंकिंवा मदीयएवकश्चिद्बुद्धिमोहः विपर्या
सोदर्पणेस्वावत् एवं तर्हि अयंहस्तोपिकस्मैतः प्रतीयते अन्तर्वेहि स्वेकरूपेणाकथं जगा
त्प्रतीयते न तथामतिविंवप्रतिविम्बयोरिव परस्परवैपरीत्येन प्रतीतिः स्यादित्याशंक्यअन्यच्छ
वितर्कयति अथोइति अथवाममस्यबालस्य अर्भकस्यापि सतोयः कश्चनाचिन्त्यात्मयोगः स्वी

३५

35

कदाचिदपराधांते वेणुपालभ्य तदा तन्महदाश्चर्यमभूदिति कथयन्नाह एकदेति ३३ उपाल
भ्यानिर्भर्त्स्य भयेन संभ्रांते प्रेक्षणे चपले निरीक्षणे यस्यास्ते ३४ अदांतात्मन् चपलगा
त्र रहः एकांते ३५ नाहं भक्षितवानिति तर्हि वा त्वं किंचिन्न घा भक्ष्यते मत्कृते तावदादोषवत्सर्वे म
त्यीति भावः समक्षं मत्प्रत्यक्षे व्यादेहि मुखं विवृणु ३६ तत्र तस्मिन्मुखे विश्वं ददृशे दृष्टवती सा पंच

एकदा क्रीडमानास्ते रामाद्या गोपदारकाः कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदयन्
३३ सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी यशोदा भयसंभ्रान्तप्रेक्षणाक्षमभाष
त ३४ रे कृष्ण कस्मादान्तात्मन्मृदं भक्षितवानसि रहश्चलगात्रैस्ते यशोदा न भक्ष्यते
३५ नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः यदि सत्यगिरः तर्हि समक्षं पश्य मे मुखं
३६ यद्येवं तर्हि व्यादेहीत्युक्तः स भगवान्हरिः व्यादत्ताव्याहतैश्वर्यः क्रीडामनुजबाल
कः ३७ सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दु
तारकं ३८ ज्योतिश्चक्रं जलं तेजो नभस्वान्वियदेव च वैकारिकाणीन्द्रियाणि मनो मा

यति जगत् जंगमं स्थास्नु स्थावरं खमंतरिक्षं साद्रिद्वीपाब्धिभूगोले पर्वतद्वीपसमुद्रसहितं भूगोलं भू
लोकं वायुः प्रवहः अग्निः वेधुताः इंदुतारकाः तत्सहितं ३८ ज्योतिश्चक्रं स्वर्लोकं वैकारिका
णि देवाः मनः तैः वैकारिकेण गाहे न गृहीतमपि देवे वेलक्षणात्पुनः कृष्णेर द्विगुणानि च तेन सा

श्री॰
भा॰ द॰
टी॰
३६

मायाबलोदयमाह त्रय्येत्यादि द्वाभ्यां उपनिषद्भिर्ब्रह्मेति सांख्यैः पुरुष इति योगैः परमात्मेति सात्वतैर्भगवानिति उपगीयमानं माहात्म्यं यस्य तं ४५ अतिविस्मयेन पृच्छति नंद इति महोदयः महानुदयः श्रेयो यस्मात्तत् ४६ पपौ यस्याः स्तनं सत्त्ववती तौ पितरौ यावपि यत् नान्वविंदेतां प्राप्नुवतां कृष्णस्य उदारं महत् अर्भकेहितं बाललीलां यच्च कवयो गायंति यदद्यापि कथ्यते

त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः उपगीयमानमाहात्म्यं हरिं सामन्यतात्मजं ४५ राजोवाच नंदः किमकरोद्ब्रह्मन् श्रेय एवं महोदयं यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ४६ पितरौ नान्वविंदेतां कृष्णोदारार्भकेहितं गायंत्यद्यापि कवयो यल्लोकशमलापहं ४७ श्रीशुक उवाच द्रोणो वसूनां प्रवरो धरया सह भार्यया करिष्यमाण आदेशान् ब्रह्मणस्तमुवाच ह ४८ जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ भक्तिः स्यात्परमा लोके ययांजो दुर्गतिं तरेत् ४९ अस्त्वित्युक्तः स भगवान् व्रजे द्रोणो महायशाः जज्ञे नंद इति ख्यातो यशोदा सा धराभवत् ५० ततो भक्तिर्भगवति पुत्रभूते

लोकशमलापहं कृष्णकीर्तिं तत्पठितं सत् लोकानां शमलं पापं अपहरतीति तयोर्विंदतोऽन्या तमत्र बभूव स किं पुण्यं कृतवान् नंदो यशोदा वा ४७ ब्रह्मण आदेशान् गोपालनादिलक्षणां ४८ द्रोणो सोऽयं नंद इति ख्यातः सा च धरा यशोदाभवत् अस्त्वित्युक्तः स एवं हेति वा ५० गो

३६

36

स्वलीलया पुत्रभावानुकारिणा ५४ इति श्रीभावार्थदीपिकायामष्टमः ८ नवमे पयउत्सिक्तेर्थ
त्यागोप्यपत्यस्य कृते विलोक्याभोगादिकं सदाम्नावबंधने तन्नदृशा श्रितेविश्वं हठाद्विस्मितचेत
सः सेवयन्नेह्यो गलामल्पां पूर्णां तामन्वदर्शयत् स्वयं दधिनिर्ममंथ तदा चागायदिति चकारा

कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं व्रजे विभुः सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया
५४ इति श्रीभागवते दशमस्कंधे अष्टमोऽध्यायः ८ शुक उवाच एकदा गृहदासीषु यशो
दा नंदगेहिनी कर्मांतरनियुक्तासु निर्ममंथ स्वयं दधि १ यानि यानीह गीतानि तद्बाल
चरितानि च दधिनिर्मंथने काले स्मरंती तान्यगायत २ क्षौमं वासः पृथुकटितटे बिभ्रती
सूत्रनद्धं पुत्रस्नेहस्नुतकुचयुगं जातकंपं च सुभ्रूः रज्ज्वाकर्षश्रमभुजचलत्कंकणौ कुंडले
च स्विन्नं वक्त्रं कबरविगलन्मालती निर्ममंथ ३ तां स्तन्यकाम आसाद्य मथ्नंतीं जननीं ह
रिः गृहीत्वा दधिमंथानं न्यषेधत्प्रीतिमावहन् ४ तमंकमारूढमपाययत्स्तनं स्नेहस्नु
तं सस्मितमीक्षती मुखं अतृप्तमुत्सृज्य जवेन सा ययावुत्सिच्यमाने पयसि त्वधिश्रि
ते ५ ॥

न्वयः २ सूत्रनद्धं कांचीबद्धं रज्ज्वाकर्षणेन श्रमो ययोः तयोः भुजयोश्चलंतौ कंकणौ च कबराद्वि
गलंती मालती यस्याः सा अधिश्रिते चुल्लीमारोपिते प्रतितापेनोत्सिच्यमाने ५ ॥

तंमर्त्यलिंगमधोक्षजमात्मजंमत्वाबबंधेति १४ द्व्यंगुलोनंद्वाभ्यामंगुलिभ्यामसंपूर्णं १५ कि
तंजुषंतीनांसखीनांस्वयमपिहसंतीविस्मयमाह १७ नचैवमस्वातंत्र्यप्रसंगइत्याह एवंसंदर्शितेति
तिसेश्वरमिदंविश्वंयस्यवशेयदधीनमित्यर्थः १९ भगवत्प्रसादमन्योपिभक्तोलभेतइदंन

तंमत्वात्मजमव्यक्तंमर्त्यलिंगमधोक्षजं गोपिकोलूखलेदाम्नाबबंधप्राकृतंयथा १४
तद्दामबध्यमानस्यस्वार्भकस्यकृतागसः द्व्यंगुलोनमभूत्तेनसंदधेन्यच्चगोपिका १५
यदासीत्तदपिन्यूनंतेनान्यदपिसंदधे तदपिद्व्यंगुलंन्यूनंयद्यदादत्तबंधनं १६ एवं
स्वगेहदामानियशोदासंदधत्यपि गोपीनांसुस्मयंतीनांस्मयंतीविस्मिताभवत् १७
स्वमातुःस्विन्नगात्रायाविस्रस्तकबरस्रजः दृष्ट्वापरिश्रमंकृष्णःकृपयासीत्स्वबंधने
१८ एवंसंदर्शिताह्यंगहरिणाभृत्यवश्यता स्ववशेनापिकृष्णेनयस्येदंसेश्वरंवशे १९
नेमंविरिंचिर्नभवोनश्रीरप्यंगसंश्रया प्रसादंलेभिरेगोपीयत्तत्प्रापविमुक्तिदात् २०
नायंसुखापोभगवान्देहिनांगोपिकासुतः ज्ञानिनांचात्मभूतानांयथाभक्तिमता
मिह २१ ॥

निवित्रमितिमसौमोचितमाहनेममिति विरिंचिःपुत्रोपिभवःस्वात्मापिश्रीर्जायापि २० फ
लितमाहनायमिति देहिनांदेहाभिमानिनांमनस्विनांज्ञानिनांनिरहंकाराभिमानिनामपि

अपश्यन्नद्दृष्ट्वा क्षीबाणौ मत्तौ समबुध्यत ५ ज्ञात्वा न्यवसनावाह तौ दृष्ट्वेति ६ अनुग्रहार्थाय अनु
ग्रहस्तु मदनाशाय अयं श्रीकृष्णदर्शनेन तदर्थं शापं दास्यमानः ७ न ह्यन्य इति जोष्यान्प्रिय
विषयान्जुषतः सेवमानस्य पुंसः श्रीमदादयः आभिजात्यादिः सत्कुलविद्यादिजनितो मदः
अन्यो नास्ति रजोगुणः रजःकार्यं यत्रास्त्र्यादिरूपो न हि तथा बुद्धिभ्रंशः बुद्धिं भ्रंशयतीति तथा कि

यदृच्छया पि देवर्षिर्भगवांस्तत्र कौरव अपश्यन्नारदो देवौ क्षीबाणौ समबुध्यत ५ तौ दृ
ष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशङ्किताः वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ६
तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ७
नारद उवाच न ह्यन्यो जुषतो जोष्यान्बुद्धिभ्रंशो रजोगुणः श्रीमदादाभिजात्यादिर्यत्र स्त्री
द्यूतमासवः ८ हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः मन्यमानैरिमं देहमजरामृत्यु न
श्वरं ९ देवसंज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितं भूतध्रुक्तत्कृते स्वार्थं किं वेद निरयो यतः

न श्रीमद एवेति ८ तदाह हन्यन्त इत्यादिभिश्चतुर्भिः यत्र श्रीमदे इमं नश्वरं देहमजरामृत्युम
जरामृत्युं यथा भवति तथा मन्यमानैः ९ नरदेव भूदेवसंज्ञितमपि पक्ष्यादिभिर्भक्षितं
विड्भवति तद्दग्धं भस्म संज्ञितं अप्यन्यद्देहं कृमिसंज्ञितं तत्कृते तदर्थं यो भूतध्रुक् प्राणिद्रोही स्यात्
तो भूतद्रोहान्निरयो भवति किं स्वार्थं न वेदेत्यर्थः १० ॥ ॥

आत्मयोत्ताना मात्मैवयोत्तत्तरणे साधनेयथाभक्तानोमद—यथोदायाःकृष्णस्तबंधनेप्रति
ताश्रयेममाथबंधनीयएवेतिकृष्णस्यस्वबंधनिषेधोप्रतिज्ञाः येनस्तोऽतंतर्गतस्वापिकिंबंधुग
मोति तत्रकृष्णः इति विचार्य अहंकृपयाभक्तादीनोस्वतंत्रः इतिहि जरद्भक्तस्यकृतस्तमाहोऊ
र्वन्ममप्रतिज्ञायात्तनममभक्तस्यातिस्वबंधनेस्वीकृतवान्एवंगोपीप्रतितातातत्राह विज्ञमा

कृष्णस्तुगृहकृत्येषुव्यग्रायांमातरिप्रभुः अद्राक्षीदर्जुनौपूर्वंगुह्यकौधनदात्मजौ २२
पुरानारदशापेनवृक्षतांप्रापितौमदात् नलकूवरमणिग्रीवावितिख्यातौश्रियान्वि
तौ २३ इतिश्रीभागवतेदशमेगोपीप्रसादोनामनवमः ९ राजोवाच कथ्यतांभगव
न्नेतत्तयोःशापस्यकारणं यत्तद्विगर्हितंकर्मयेनवादेवर्षेस्तमः १ शुकउवाच रुद्रस्या
नुचरौभूत्वासुदृप्तौधनदात्मजौ कैलासोपवनेरम्येमन्दाकिन्यांमदोत्कटौ २ वारुणीं
मदिरांपीत्वामदाघूर्णितलोचनौ स्त्रीजनैरनुगायद्भिश्चेरतुःपुष्पितेवने ३ अन्तःप्रवि
श्यगङ्गायामम्भोजवनराजिनि चिक्रीडतुर्युवतिभिर्गजाविवकरेणुभिः ४ ॥

त्राइति २२ भक्तैर्बद्धस्यापिअन्यमोचकत्वंवक्तुमाहकृष्णस्त्विति २३ इतिश्रीभावार्थदीपिकायांदशमे
नवमः ९ दशमेपातयन्वृक्षौनारदस्याघयमलार्जुनौ तत्रतामप्यवदेवामोक्षःतस्ततरतीर्थेते
यद्विगर्हितंकर्मयेनवादेवर्षेर्भागवतोत्तमस्यापितमःक्रोधःतदेतत्कथ्यतामिति १ पुनने

श्री॰ भा॰ द॰ पू॰ टी॰ अ॰

ननु साधूनां धनिकपक्षत्वे किं स्यात्तत्राह साधूनामिति धनैः स्तम्भो गर्वो येषां तैः २० तमासद
मत्तानकृतमेदं स्त्रैणयोः स्त्रीजितयोः २१ तमःप्लुतौ तमोव्याप्तौ २२ अपतिसुप्तौ हंताकितिस्मृत्यनुग्र
हणाति स्यातां नैवमित्यादिना मत्प्रसादेन स्मृतिः स्यात् २३ स्वर्लोकतां देवत्वं पुनर्लब्ध्वा तत्रापि मदनुग्र

साधूनां समचित्तानां मुकुन्दचरणैषिणां उपेक्ष्यैः किं धनस्तम्भैरसद्भिरसदाश्रयैः २० तदहं म
त्तयोर्माध्व्या वारुण्या श्रीमदान्धयोः तमोमदं हरिष्यामि स्त्रैणयोरजितात्मनोः २१ यदिमौ
लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ न विवाससमात्मानं विजानीतः सुदुर्मदौ २२ अतोऽर्हतः
स्थावरतां स्यातां नैवं यथा पुनः स्मृतिः स्यान्मत्प्रसादेन तत्रापि मदनुग्रहात् २३ वासुदे
वस्य सान्निध्यं लब्ध्वा दिव्यशरच्छते वृत्ते स्वर्लोकतां भूयो लब्धभक्ती भविष्यतः २४ शुक उ
वाच एवमुक्त्वा स देवर्षिर्गतो नारायणाश्रमं नलकूवरमणिग्रीवावासतुर्यमलार्जुनौ
२५ ऋषेर्भागवतमुख्यस्य सत्यं कर्तुं वचो हरिः जगाम शनकैस्तत्र यत्रास्तां यमलार्जुनौ
देवर्षिर्मे प्रियतमो यदिमौ धनदात्मजौ तत्तथा साधयिष्यामि यद्गीतं तन्महात्मना २६
इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलं २७॥

हात्तलब्धभक्ती भविष्यत इति २४ अथ तमाह ऋषेरिति २५ किमिति सत्यं कर्तव्यं तत्राह देव
र्षिर्यद्यतः तत्ततः २६ यमयोर्यमलयोः सहजातयोः आत्मनः कृष्णस्य तन्मध्यप्रवेशमात्रेण ति

अ॰

निषेकः पितुः मातुः पितुर्वा मातामहस्य पुत्रिकाकरणे ७ अव्यक्तप्रभवाप्यये अव्यक्तात्प्रभवः
तस्मिन्नेवाप्ययो यस्य तं मात्मसात्कृत्वा आत्मेति मत्वा अप्रमत्तो मृत्युनाज्ञाते ११ एवं श्रीमद्दिवा
चेष्टितमप्रकात्यत्तीकारं निश्चिनोति अप्रमत्तः इति पदं श्लोके केवलेदारिद्र्यमेवज्ञत्तरत्याह आत्मौप
म्येनेति तत्तोनदुःखत्तीतिभावः १५ महत्त्वात्तमाह यथेति सुखदुःखान्यादिलिंगैः सर्वेषां जीवानां

देहः किमन्नदातुः स्वस्तिपेक्तुर्मातरेववा मातुः पितुर्वा बलिनः क्रेतरग्नेः शुनोपिवा ११
एवं साधारणं देहं अव्यक्तप्रभवाप्ययं कोविद्वानात्मसात्कृत्वा हंति जंतून् ऋतेऽसतः १२
अमत्तः श्रीमद्दोपम्यदारिद्र्यपरमाञ्जनं आत्मौपम्येन भूतानि दरिद्रः परमीत्तते १३ यथा
ऽकंटकविद्धांगो जंतोर्नेच्छति तां व्यथां जीवसाम्यं गतो लिंगैर्न तथा विद्धकंटकः १४ द
रिद्रो निरहंस्तंभो मुक्तः सर्वमदैरिह कृच्छ्रं यदृच्छयाप्नोति तद्धि तस्य परं तपः १५ नित्यं ह
त्ताम देहस्य दरिद्रस्यान्नकांक्षिणः इंद्रियाणि विशुष्यंति हिंसापि विनिवर्तते १६ दरिद्र
स्यैव युज्यंते साधवः समदर्शिनः सद्भिः क्षिणोति तं तर्षं तत आराद्विशुद्ध्यति १७ ॥

सुखदुःखे समे इति तान्यानीत्यर्थः १६ किंचदारिद्र्यमोत्तमपि साधयतीत्याह श्लोकत्रयेण
निरहंस्तंभो निर्गतो अहंकाररूपः स्तंभो यस्य १७ ॥ युज्यंते स्वतएव संगच्छंते
तर्षं तृष्णां १९ ॥ ॥ रामायनमः ॥

बद्धोलूखलमेवद्रुमलूखले यस्मिंस्त ४३ इतिश्रीभावार्थदीपिकायांदशमस्कंधेदशमोऽध्या
यः १० एकादशेसमागत्यवृंदावनमथार्भकैः वत्सान्पालयतानेनगतौवत्सवकाहतौ १ त

शुकउवाच इत्युक्त्वातौपरिक्रम्यप्रणम्यचपुनःपुनः बद्धोलूखलमामंत्र्यजग्मतु
र्दिशमुत्तरां ४३ इतिश्रीभागवतेदशमस्कंधेनलकूवरमणिग्रीवमोक्षोनामदश
मोध्यायः १० श्रीशुकउवाच गोपानंदादयःश्रुत्वाद्रुमयोःपततोरवं तत्राजग्मुः
कुरुश्रेष्ठनिर्घातभयशंकिताः १ भूम्यांनिपतितौतत्रददृशुर्यमला
र्जुनौ बभ्रमुस्तमविज्ञायलक्ष्यंपतनकारणं २ उलूख
लंविकर्षंतंदाम्नाबद्धंचबालकं कस्येदंकुत
आश्चर्यमुत्पातइतिकातराः ३ ॥

तल्लक्ष्यंप्र ततःपुरतोदृश्यमपिपतनकारणमविज्ञानाद्बभ्रमुः २ लक्ष्यंकारणमुलूख
लमितिभ्रमकारणमाह कस्मेदंकुतस्मादेःकस्मैउत्तोवाकारणात् अहोआश्चर्यंउत्पातइ
तिकातराभीताःसंतोबभ्रमुरित्यर्थः ३ ॥

तस्य गतयोर्वा वयोः पूर्वस्वभावो मा भूत् किंतु वाणीगुणानुकथने इत्यादिना अस्मदोर्ह्येयो क्षेति तत्र द्विवचनस्थाने बहुवचनं अस्मत्संगिनामन्येषामपीति बहुवचनेन तथा निवासभूते एत्र गतत्तस्य प्राणाः त्वद्विषामभूत मिति बहुमानेन जगतस्त्वणामेषि गोश्चित्यर्थः भवन्न तूनाभव न्नूतीनां ३८ संकीर्तितः संस्तुतः ३९ वाग्भिः न त्वमो ग्रन्थोत्तमपत्तो ज्योध्यानित्यादिभिः श्री

अनुजानीहि नो भूमंस्तवानुचरकिंकरौ दर्शनं नो भगवत ऋषेरासीदनुग्रहात् ३७ वा
णीगुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः स्मृत्यां शिरस्त
व निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनां ३८ इत्थं संकीर्ति
तः ताभ्यां भगवान्देवकीसुतः दाम्नाचोलूखले बद्धः प्रहसन्नाह गुह्यकौ ३९ श्रीभ
गवानुवाच ज्ञातं मम पुरैवैतदृषिणा करुणात्मना यच्छ्रीमदांधयोर्वाग्भिर्विभ्रंशोऽनु
ग्रहः कृतः ४० साधूनां समचित्तानां सुतरां मत्कृतात्मनां दर्शनान्नो भवेद्बंधः पुंसोऽ
क्ष्णोः सवितुर्यथा ४१ तद्गच्छतं मत्परमौ नलकूबर सादनं संजातो मयि भावो वा
मीप्सितः परमोऽभवः ४२ ॥

विभ्रंशोऽनुग्रहः कृत इति ४० युक्तमेवैतदित्याह साधूनां धर्मवर्तिनां समचित्तानां आत्म
विदां सुतरां मत्कृतात्मनां मयि अर्पितचित्तानां तेषां कृपातिरेकात् सुतरामित्युक्तं सवितुर्द
र्शनाद्यथा नेत्रयोरंधता न भवेत्तद्वत् ४१ प्राधान्यादेकस्य संबोधनेन हे नलकूबर युवां सादनं स्व

नं निकेतनं मत्परमौ सन्तौ गच्छतं वां युवयोः अपतितो मयि प्रेमा जा
तः इति भावः न भवो यस्मिन्नसः ४२ ॥

मध्यगेन द्वयोर्मध्यगेन केवलमेतावत् वृक्षाभ्यां निर्गतौ दिव्यौ पुरुषावपि चक्ष्महि दृ
ष्टवन्तो वयमिति ४ केवलं तत्किं कानन शङ्करेवमन्ये तु सन्देहयुक्तचित्ता बभूवुरिति ५
भगवन्मायया मोहितत्वान्नैवं तस्याचरितमाह उलूखलमिति ६ गोपीभिरिति सार्धमिति पा

बाला ऊचुरनेनेति तिर्यग्गतमुलूखलं विकर्षता मध्यगेन पुरुषावप्यचक्ष्महि ४ न
ते तदुक्तं जगृहुर्न घटेतेति तस्य तत् बालस्योत्पाटनं तर्वोः केचित्सन्दिग्धचेतसः ५
उलूखलं विकर्षन्तं दाम्ना बद्धं स्वमात्मजं विलोक्य नन्दः प्रहसद्वदनो विमुमोच ह
६ गोपीभिः स्तोभितो नृत्यन्भगवान्बालवत्क्वचित् उद्गायति क्वचिन्मुग्धस्तद्वशो
दारुयन्त्रवत् ७ बिभर्ति क्वचिदाज्ञप्तः पीठकोन्मानपादुकं बाहुक्षेपं च कुरुते स्वा
नां च प्रीतिमावहन् ८ दर्शयंस्तद्विदां लोके आत्मनो भृत्यवश्यतां व्रजस्योवाह
वै हर्षं भगवान्बालचेष्टितैः ९ ॥

कमानो गायतीव बाल्यमनुकरोति स्म तदाह स्तोभितः करतालादिना प्रोत्साहितः ७ उ
ह्यमानेयत्यत्र सः आनीतं समर्पयस्वेति बिभर्ति केवलं पीठादि बाहुक्षेपं करताडनं तद्विदो
वेत्ति चकारस्यान्वयः तस्यैश्वर्यं विदन्तीति पत्ते घोषमेव व्रजस्य हर्षमुवाहेति ९ ॥

श्री० भा० द० सु० टी० ४४

न्तैः नवैः कुचगतैः कुं[illegible]मकांतियांतास्ताः नूत्नैर्नवकुचकुंकुमैः तेनकांतियांमासितिवा ३३ व्र
जवासंगोकुलवसतिस्थाने ३५ स्वकालेनतद्योग्यकालेन ३७ ग्रथक्रीडामाहलीलावर्णयतिद्वा

गोधनानिपुरस्कृत्यशृंगाण्यापूर्यसर्वतः तूर्यघोषेणमहतायुगःसहपुरोहिताः ३२ गो
प्योरूढरथानूत्नकुचकुंकुमकांतयः कृष्णलीलाजगुःप्रीत्यानिष्ककंठ्यःसुवाससः ३३
यदायशोदारोहिण्यावेकंशकटमास्थिते रेजतुःकृष्णरामाभ्यांतत्कथाश्रवणोत्सुके
३४ वृंदावनंसंप्रविश्यसर्वकालसुखावहं तत्रचक्रुर्व्रजावासंशकटैरर्धचंद्रवत् वृंदाव
नंगोवर्धनंयमुनापुलिनानिच वीक्ष्यासीदुत्तमाप्रीतीराममाधवयोर्नृप ३६ एवंव्रजौ
कसांप्रीतिंयच्छंतौबालचेष्टितैः कलवाक्यैःस्वकालेनवत्सपालौबभूवतुः ३७ अविदू
रेव्रजभुवःसहगोपालदारकैः चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ३८ क्वचि
द्वादयतोवेणुंक्षेपणैःक्षिपतःक्वचित् क्वचित्पादैःकिंकिणीभिःक्वचित्कृत्रिमगोवृ
षैः ३९ ॥

विहरेत्यादिना ३८ क्षेपणैर्बिल्वामलकादिभिःकिंकिणीयुक्तैःपादैःक्षिपतस्ताडयंतःवत्सपा
लायवद्धिन्नाःकंबलादिपिहिताःवृषरूपमनुकुर्वंतितैःसह ३९ ॥

श्री भा द स्क टी ४५

आदित्यैर्वाते ४८ ४९ नेत्रयोः सुश्रोवीरणावत्‌निर्ग्रंथित्‌ णाविपोचवत्‌ ५० समीक्षितः सुहृद्भिः आ
नन्दैः पौरैरन्यैश्च संस्तवैः सह ५१ स्वस्थानमागते प्राणाभिवक्षस्त्वचप्राणीयपकीकान्त्य ५२ स

तेनवद्दग्धवीलामहामायमवस्थिते नवमवंशनिर्भिन्नगिरेः शृंगमिवच्युतं ५६ सवैव
कोनामममहानवीवकतूपधृत् आगात्य महमाकलितीताहेत्यमहली कलिमहा
वकत्रतहस्त्रारामात्‌ योर्भकाः बभूवुर्विदियाणीविना प्राणैर्विचेतनः ५८ तेनाल
स्त्रलेमहस्तेनममिवज्ञापालस्तत्त्वपितरेजगाकृते चमत्कृतमघोतिहवाततनवकः तेन
हेतुनरम्पपघत ५९ तमायतैतेमनिःसृत्यतेयोतीर्भोवके केमसावेसतागतिः
पपपन्नबालेषु स्वाग्लीलयामदावह्रोवीरणावहिवोकसा ५० तदावकारिहले
कवासिनः समाकिरन्तंदनमल्लिकादिभिः समीक्षिवानकपोवतेस्तवैः तहीत्यगोपा
लसुतानिरीक्षितौ ५१ नत्तेसकास्याद्‌उपलभ्यबालकारामादयः प्राणमिवेद्वियोग
णाः स्थानागतेतेपरिरभ्यनिर्वृताः प्राणीयवत्सावजमेत्यतद्गुहः ५२ कावातहिमि
तेगोपानोप्याश्चातिप्रियाहताः प्रत्यागतमिवोत्सवादेहतत्हषितेवणाः ५३ ॥

तिप्रियेणप्रीत्याआहताः प्रत्यागतमिवलोकोनराद्‌गतेमिवत्‌षिताभिश्चत्समाभिश्रमतोपि

॥ नेत्रविहेकस्कन्धे टीकायां ५ ४५

४५

तेनैव भृंगरवेणाक्रमेन वा साकं प्रवृत्ता बालकाः स्त्रियाः स्नेहवन्ताः पिक पिकारं स्याः पिबे
त्राद्योपघातेमहस्वाधिकसंख्याप्रकान्वत्मान् १ काचादिभिः पूर्वमानमिभूषिताप्रपिफ

तेनैव साकं प्रवृत्ताः सहस्रवपाः स्त्रियाः स्वपिस्वेत्रविषाणवेणवः स्वकान्सहस्रोपरि संख्ये
यानिताल्वत्मान्तरक्तान्यविनियत्रमंदा २ क्रमवत्तोरमंख्योतेर्यपीक्रत्यस्ववत्सकान्
चारयेत्तोर्भलीलाभिर्विजह्नुःनत्रतत्र ३ फलप्रबालस्तवकस्तमनःपिञ्छधातुभिः का
चगुञ्जामणिस्वर्णभूषिताप्यभूषयत् ४ मुष्णंतोन्योन्यपशिक्यादीन्ज्ञातानाराञ्चचि
क्षिपुः तत्रत्याश्चपुनर्दूरात्सततश्चपुनर्ददुः ५ यदिदूरंगतःकृष्णोवणशोभेक्षणायतत्
प्रहंपूर्वमहंपूर्वमितिसंस्पृश्यरेमिरे ६ केचिद्वेणून्वादयंतोध्मांतःशृंगाणिकेचन के
चिद्भृंगैःप्रगायंतःकूजंतःकोकिलैःपरे ७ विच्छायाभिःप्रधावंतोगच्छंतःसाधुहंसकैः व
केरुपविशंतश्चनृत्यंतश्चकलापिभिः ८ ॥

लादिभिरात्मानमभूषयन्नित्यर्थः ४ मुष्णंतःचोरयंतः ५ यदिदूरंगतःकृष्णोभवतितत
न्नहीति ६ ध्मांतोवादयंतःशृंगैःसह ७ विच्छायाभिःपक्षिच्छायाभिः
कलापिभिःमयूरैः ८ ॥



46

श्री भा० द० सु० टी० ५०

सुखक्रीडनवीक्षणाक्षमा यस्य सकण्ठभूतः यस्यान्तः अन्तरंध्रेद्वेपीतामृतैरपितनोसृतुभीतैरम
रैः प्रतीक्ष्यते कथमसौ म्रियतेति कदाचेति यद्वा कण्ठभूते सुखक्रीडने यत्र अन्तः हृदये अमरैः प्रतीक्ष्य
ते विचिन्त्यते पीतामृतैरपि नजीवितेप्सुभिः अयं भावः नामृतपानमात्रेण जीवनं सफलं भवति
इति किंतु भगवल्लीलानुस्मरणेनेति तदेव नित्यं मनः चिन्त्यत इति १३ कृष्णमुखानर्भकान्दृष्ट्वा

अथाघनामाभ्यपतन्महासुरस्तेषां सुखक्रीडनवीक्षणाक्षमः नित्यं यदन्तर्निजजीवि
तेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते १३ दृष्ट्वार्भकान्कृष्णमुखानघासुरः कंसानुशि
ष्टः सबकीबकानुजः अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं सबलं हनिष्ये १४ एते
यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः प्राणे गते वर्ष्मसु का नु चिंता
प्रजासवः प्राणभृतो हि ये ते १५ रामः ॥

सइति अघस्य निश्चित्य अजगरो वपुर्धृत्वा तेषां गमनमार्गे पथि व्यपोत इत्युत्तरीयश्लोकगतेना ॥ ४९ ॥
न्वयः कंसेनानुशिष्टः प्रहितः बकीपूतना कथंच्यघस्य तदा हृष्य अयं तु इति मार्यन समयोर्द्वयोः
स्थाने पने तं कृष्णं सैन्यं वत्सपालसहितं हनिष्यामि १४ ननु तथापि व्रजस्थाः यावपिष्यन्त्यने
त्याह एतइति तिलापः कृताः तिलोदकं याकल्पिताः वर्ष्मसु तदेहेषु प्रजा एवासवो ये येते

47 ५०

निश्चितं तत्पश्येत्याहुः सत्यमिति अर्ककरैरारक्तो घनमुत्तरोष्ठवत्पश्यत तस्य घनस्य प्रतिच्छायया रो
धःस्थलमधरोष्ठवत्पश्यतेति सर्वत्रान्वयः २१ सृक्किभ्यामोष्ठप्रान्ताभ्यां प्रतिस्पर्धेते तुल्यतया
वर्तेते नगोदरे गिरिदर्यौ तस्य व्यालस्य दंष्ट्राभिः स्पर्धमाने २२ आस्तृतायाममार्गः विस्तृतो दैर्घ्य
वान्मार्गः प्रतिगर्जति प्रतिस्पर्धते एषां शृङ्गाणां मध्यगतमन्धकारमन्तराननमन्तराननसमं प्रति

सत्यमर्ककरारक्तमुत्तराहनुवद्घनं अधराहनुवद्रोधस्तत्प्रतिच्छाययारुणं २१ प्र
तिस्पर्धेते सृक्किभ्यां सव्यासव्ये नगोदरे तुङ्गशृङ्गालयोऽप्येतास्तद्दंष्ट्राभिश्च पश्यत २२
आस्तृतायाममार्गोऽयं रसनां प्रतिगर्जति एषामन्तर्गतं ध्वान्तमेतदप्यन्तराननं २३ दा
वोष्णखरवातोऽयं श्वासवद्भाति पश्यत तद्दग्धसत्त्वदुर्गन्धोऽप्यन्तरामिषगन्धवत् २४
अस्मान्किमत्र ग्रसिता निविष्टानयं तथा चेद्बकवद्विनङ्क्ष्यति क्षणादनेनेति बकारि
मुखं वीक्ष्योद्धसन्तः करताडनैर्ययुः २५॥

गर्जति २३ दावेनोष्णः खरो वातो येन दावाग्निदग्धानां सत्त्वानां यो दुर्गन्धः स एव सर्पस्यान्तर्गतामि
षगन्धवद्भाति २४ एवं सत्यमेवाजगरमन्यथोत्प्रेक्ष्य निर्भया ऊचुः किं ग्रसिता ग्रसिष्यतीति अ
नेन श्रीकृष्णेन हेतुना बकारेरुशत्कमनीयं मुखं २५ ॥



48

घनच्छदाः मेघान्तरिताः कौणपाः कुणपाशिनो राक्षसाः कुणपाशिनिवृत्तिः तदीयाया २८ आत्मा
नं श्रीकृष्णं चूर्णीकर्तुमिच्छोः तस्य गले ग्रासस्य ग्रासीवैव तरसा ववृधे प्रववृधे २९ निरुद्धः श्वा
सादीनां मार्गभूतः कण्ठो यस्य तादृशस्य उद्गीर्णा दृष्टिः बहिर्निःसृतलोचनस्य अन्तरङ्गे देहम

तदा घनच्छदा देवा भयाद्धाहेति चुक्रुशुः जहृषुर्ये च कंसाद्याः कौणपास्त्वघबान्धवाः २८ तच्छ्रुत्वा भगवान्कृष्णस्त्वव्ययः सार्भवत्सकान् चूर्णीचिकीर्षोरात्मानं तरसा ववृधे गले २९ ततोऽतिकायस्य निरुद्धमार्गिणो ह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः पूर्णोऽन्तरङ्गे पवनो निरुद्धो मूर्धन्विनिर्भिद्य विनिर्गतो बहिः ३० तेनैव सर्वेषु बहिर्गतेषु प्राणेषु वत्सान्सुहृदः परेतान् दृष्ट्या स्वयोत्थाप्य तदन्वितः पुनर्वक्त्रान्मुकुन्दो भगवान्विनिर्ययौ ३१ पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश प्रतीक्ष्य खेऽवस्थितमीशनिर्गमं विवेश तस्मिन्मिषतां दिवौकसां ३२ ॥

ध्ये पूर्णः परिभूतः सन् तन्मूर्धनि ब्रह्मरन्ध्रे निर्भिद्य बहिर्गत इति ३० प्राणेष्विन्द्रियेषु स्वपाश्रमत
वर्त्मणा बहिर्गतेष्वेव ३१ अहिदेहस्थितं शुद्धसत्त्वमयं ज्योतिर्निर्गतं खेऽवस्थितं तस्मिन्नीशे
विवेश अन्येन पावनतां गतः कालस्त्वयमिति भावः ३२ ॥

नैतद्विचित्रंकिंतदित्यपेक्षायामाह अघोपीति आत्मसाम्यंत्वसमानत्वमुपगतो ३८ यस्यांग
मूर्तिःतस्यप्रतिमाप्रतिकृतिःतत्रापिकेवलंमनोमयीसापिबलादंतराहितासतीभागवतीं
प्रह्लादादिभ्यःसएवसाक्षात्स्वयमंतर्गतःकिंपुनःनित्याचासौआत्मसुखानुभूतिश्चतया

नैतद्विचित्रंमनुजार्भमायिनःपरावराणांपरमस्यवेधसः अघोपियत्स्पर्शनधौतपा
तकःप्राप्यात्मसाम्यंत्वसतांसुदुर्लभं ३८ सकृद्यदंगप्रतिमांतराहितामनोम
यीभागवतींददौगतिं सएवनित्यात्मसुखानुभूत्यभिव्युदस्तमायोंतर्गतोहिकिं
पुनः ३९ सूतउवाच इत्थंद्विजायादवदेवदत्तःश्रुत्वास्वरातुश्चरितंविचित्रं पप्र
च्छभूयोपितदेवपुण्यंवैयासकिंयन्निगृहीतचेताः ४० राजोवाच ब्रह्मन्काला
न्तरकृतंतत्कालीनंकथंभवेत् यत्कौमारेहरिकृतंजगुःपौगंडकेर्भकाः ४१ वयं
धन्यतमालोकेगुरोपिक्षत्रबंधवः यत्पिबामोमुहुस्त्वत्तःपुण्यंकृष्णकथामृतं ४२

भितोव्युदस्तामायायेनसः ३९ यादवदेवेनश्रीकृष्णेनदत्तःपरीक्षितंस्वमात्मानमर्पयित्वापरी
क्षितःसाक्षिदर्शनीतिस्वरातःस्वपालकस्तस्यपुनःश्रवणेननितरांगृहीतंवशीकृतंचेतोयस्यसः ४०
कालांतरेकौमारेकृतंपौगंडेककथंतात्कालिकमित्यर्थः ४१ तेनयःस्मारितःश्रुतेनतःते

श्री० भा० द० टी० ५५

नह्यतानिश्चविलोहियागियस्यसः ४२ ॥

५५

50

स्वकृतः स्वकार्यकृतः श्रीकृष्णस्यार्हणं सत्कृतं पूजामकुर्वन् सुष्ठु गायन्तीति सुगा गन्धर्वादयः
३४ किंच तेषां यानि अद्भुतस्तोत्रादीनि उत्सवाय मंगलस्वनाः तान् स्वधाम्नः अन्तिसमीपे श्रुत्वा
ऽजो ब्रह्मा अचिरादागतः ईश्वरस्य श्रीकृष्णस्य महिमानं दृष्ट्वा विस्मयं प्रापेति ३५ अन्यच्चाति
चित्रं वृत्तमित्याह एतदिति कौमारं पंचमाब्दात्ते पौगण्डं दशमावधि कैशोरमापंचदशाद्यौव

ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः गीतैः सुगा वाद्यधरा
श्च वाद्यकैः स्तवैश्च विप्रा जयनिःस्वनैर्गणाः ३४ तदद्भुतस्तोत्रसुवाद्यगीतिकाजया
द्यनेकोत्सवमंगलस्वनान् श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम
विस्मयं ३५ राजन्नाजगरं चर्म शुष्कं वृन्दावनेऽद्भुतं व्रजौकसां बहुतिथं बभूवाक्री
डगह्वरं ३६ एतत्कौमारजं कर्म हरेरात्माहिमोक्षणं मृत्योः पौगण्डके बाला दृष्ट्वो
चुर्विस्मिता व्रजे ३७ ॥

मेतत्ततः परं हरेः कौमारजं पंचमाब्दकृतं कर्म तद्वर्षे दृष्ट्वा पौगण्डे षष्ठे बाला अग्रे वैतद्वृत्तमि
त्यूचुः किं तत्कर्म मृत्योः सकाशाद् आत्मनामहेश्च मोक्षणं आत्मनोऽप्रसिद्धान्मृत्योः अहेश्च मो
क्षारलक्षणान् अघासुरज्योतिषः श्रीकृष्णप्रवेशनं पितदा ह्येकपितवैनस्ति ३७ ॥

श्री॰
भा॰द॰
पू॰टी॰
५१

भोजनविधानाय पुलिनं नीतोऽतीति अहो इति स्वकीयानां या केलिः क्रीडा तन्निमित्ताः संपदो यस्मात्
स्वीयानां केलीनां संपदो विद्यते यस्मिंस्तत् मृदुला अच्छा बालुका यस्मिंस्तत् किंच स्फु
टद्विकसत्सरः सरोजवान्नुत्सेनोपचारतः सर एव विकसदित्युक्तं तस्य गन्धेन हृता आ
कृष्टा अलयः पक्षिणश्च तेषां केवुदक्षेध्वनयः तेषां प्रतिध्वानाः तैर्लसन्तो द्रुमाः तैराकुले

शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्यु
त ३ तथाघवदनान्मृत्यो रक्षित्वा वत्सपालकान् सरित्पुलिनमानीय भगवानि
दमब्रवीत् ४ अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसंपन्मृदुलाच्छबालुके स्फु
टत्सरोगन्धहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुले ५ अत्र भोक्तव्यमस्मा
भिर्दिवारूढं क्षुधार्दिताः वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ६ तथेति
पाययित्वार्भा वत्सानारुध्य शाद्वले मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ७
कृष्णस्य विष्वक्पुरुराजिमण्डलैरभ्याननाः फुल्लदृशो व्रजार्भकाः सहोपविष्टा वि
पिने विरेजुश्छदा यथाम्भोरुहकर्णिकायाः ८

मे ५ दिवारूढं वेलातीतेत्यर्थः ६ आरुध्य संरुध्य शाद्वले हरिततृणादेशे ७ तदा ते रेजुः
कृष्णस्य विष्वक्परितः पुरुराजिमण्डलैर्बहुभिः पङ्क्तिमण्डलैः सहैव पङ्क्तौ गोपा विष्टाः श्री
कृष्णाभिमुखान्याननानि येषां ते फुल्लदृशो विकसितनयनाः कमलकर्णिकायाः परितः

१०
पूर्वार्धे टीका
५१

51

तथाभूतोपि कथंचिल्लब्धबहिर्दृष्टिः हे भागवतोत्तम शौनक ४४ इति श्रीभावार्थदीपि
कायां दशमे द्वादशः १२ त्रयोदशे स्वर्गसमावत्सान्बालांश्च मायया तदात्तत्सर्वरूपोहे
कृतः सर्ववदाचरत्तन्नूतनयसि नव्यामिव करोषि १ तर्हि सारभूता सारग्राहिणां ग्रन्थे निम

तद्ब्रूहि मे महायोगिन्परं कौतूहलं गुरो नूनमेतद्धरेरेव माया भवति नान्यथा
४३ सूत उवाच इत्थंस्म पृष्टः स तु बादरायणिस्तत्स्मारितानन्तहृताखिलेंद्रि
यः कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तमं ४४ इति श्री
भागवते दशमस्कंधे द्वादशोध्यायः १२ शुक उवाच साधु पृष्टं महाभाग त्वया
भागवतोत्तम यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः १ सतामयं सारभृतां
निसर्गो यदर्थवाणीश्रुतिचेतसामपि प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रिया वि
टानामिव साधुवार्ता २॥

र्गः स्वभावः कोसौ अच्युतस्य वार्ता प्रतिक्षणं साधु नव्यवद्भवतीति यथा विटानां स्त्रियाः
कामिन्या वार्ता तद्वत् सारैकथ्यंभूतानामपि सतां या अच्युतवार्ता वार्थी येषां ता
निवाणीश्रुतिचेतांसि येषां तथाभूतानामपि २॥

श्री
भा॰द॰
स्कं॰टी॰
५२

अद्रिषु जलहृदीषु कुंजेषु लतादिपिहितविवरेषु सैकतस्थानेषु १४ अंभोजजन्मनः पद्माज्जनि
र्यस्य सः ब्रह्मा तदंतरे तस्मिन्नेवांतरे गतः प्रागागतः स्थितः मायार्भकस्येशितुः मंजु मनोहरं महित्वं महि
मानं द्रष्टुमन्यदपि च द्रष्टुं तत्रस्थवत्सानितः स्थानात् वत्सपांश्चान्यत्र नीत्वा स्वयं तिरोबभूव प्र

इत्युक्त्वाद्रिदरीकुंजगह्वरेष्वात्मवत्सकान् विचिन्वन्भगवान्कृष्णः सपाणिकवलो य
यौ १४ शुक उवाच अंभोजन्मजनिस्तदंतरगतो मायार्भकस्येशितुर्द्रष्टुं मंजु महित्व
मन्यदपि तद्वत्सानितो वत्सपान् नीत्वान्यत्र कुरूद्वहांतरदधात्खेवस्थितो यः पुरादृ
ष्ट्वाघासुरमोक्षणं प्रभवतः प्राप्तः परं विस्मयं १५ ततो वत्सानदृष्ट्वैत्य पुलिनेपि च वत्स
पान् उभावपि वने कृष्णो विचिकाय समंततः १६ क्वाप्यदृष्ट्वांतर्विपिने वत्सान्पालांश्च
विश्ववित् सर्वं विधिकृतं कृष्णः सहसावजगाम ह १७ ततः कृष्णो मुदं कर्तुं तन्मातृ
णां च कस्य च उभयायितमात्मानं चक्रे विश्वकृदीश्वरः १८ ॥ यमः

भवतः श्रीकृष्णस्य १५ उभावपि वत्सान्वत्सपांश्च विचिकाय अन्वीष्टवान् १६ विधिकृतं ब्र
ह्मणा कृतं व्रजगामनं ज्ञातवान् १७ उभयायितं वत्सपालरूपेण वर्तमानमित्यर्थः अयं भावः
यदि तत्सीमासेत तर्हि तन्मातॄणां विषादः स्यात् यदि वानयामि तर्हि ब्रह्मणो मोहो न
स्यादिति तदुभयप्रीतये तथा चक्रे इति १८ ॥ यमः

52

एवं यामत्रयमेवं तत्कालक्रीडानियमेन आगताः आभिः स्वाचरितैः स्वस्याचरितैः गोभिश्चरितैर्वा
मातृर्हर्षयन् तन्मस्तकाभिघ्राणालिङ्गनादिभिरुपलालितः इति २३ गवां मोहनमाह गाव इति परिहू
ताः स्वैरंसंगताः स्वकान्वत्सतरानपाययन् ॥ २४ एतावद् अविशेषमेवोक्तं सम्प्रति विशेषमा
रमाभीहित्याह गोगोपीनामिति गवां गोपीनां चास्मिन् कृष्णे मातृता उपलालनादि पूर्वं

ततो नृपोन्मर्दनमज्जलेपनालङ्काररक्षातिलकाशनादिभिः संलालितः स्वाचरितैः
प्रहर्षयन्सायं गतो यामयमेन माधवः २३ गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः
परिहूतसंगतान् स्वकान्स्वकान्वत्सतरानपाययन्मुहुर्लिहन्त्यः स्रवदौधसं पयः
२४ गोगोपीनां मातृतास्मिन्सर्वा स्नेहर्द्धिकां विना पुरोवदास्वपि हरेस्तोकता मायया
विना २५ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याब्दमन्वहं शनैर्निःसीम ववृधे यथा कृष्णे त्व
पूर्ववत् २६ ॥ यतः

वदेवासीत् किन्तु स्नेहर्द्धिकां विना स्नेहाधिक्यमिदानीं विशेषं इत्यर्थः आनन्दनो गोपीषु हरे
स्तोकतालालनादि पूर्ववदेवासीत् किन्तु मायया विना ममेयं माता अहमस्याः पुत्र इति मोह
विनेत्यर्थः २५ स्नेहर्द्धिमेवाह व्रजौकसामिति यथा कृष्णे पुरा आनन्दनेषु स्वपुत्रेष्वा
पि स्नेहाधिक्यं पूर्वमासीदिदानीं स्वतोकेष्वपि तथैवावर्धतेत्यर्थः अब्दं यावदन्तरं निःसीमम्



53

तदेव दर्शयति यावदिति वत्सकानां चाल्पकवपुः प्रमाणमनतिक्रम्य वत्सपवपुर्यद्यपि योऽल्पं यद्यावत्सपादिवपुस्तावत् सोऽजः श्रीकृष्णो बभौ इत्यन्वयः एवं सर्वं विष्णुमयं जगादिति श्रुति द्वारा गीर्वाणीति स्याअयं वत् सागा ऽस्वरूपेण प्रत्यक्षतया यथा तथा बभूवेत्यर्थः ॥ १९ ॥ एवं सर्वात्मा सन् व्रजे प्राविशत् कथं स्वयमात्मा प्रयोजकः कर्ता आत्मगोवत्सान् आत्मस्वरूपान्

यावद्वत्सपवत्सकाल्पकवपुर्यावत्कराङ्घ्र्यादिकं यावद्यष्टिविषाणवेणुदलशिग्या वद्विभूषाम्बरं यावच्छीलगुणाभिधाकृतिवयो यावद्विहारादिकं सर्वं विष्णुमयं गिरोऽङ्गवदजः सर्वस्वरूपो बभौ ॥ १९ ॥ स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः क्रीडन्नात्मविहारैश्च सर्वात्मा प्राविशद्व्रजम् ॥ २० ॥ तत्तद्वत्सान्पृथङ्नीत्वा तत्तद्गोष्ठे निवेश्य सः तत्तदात्माभवद्राजंस्तत्तत्सद्म प्रविष्टवान् ॥ २१ ॥ तन्मातरो वेणुरवत्वरोत्थिता उत्थाप्य दोर्भिः परिरभ्य निर्भरं स्नेहस्नुतस्तन्यपयःसुधासवं मत्वा परं ब्रह्म सुतानपाययन् ॥ २२ ॥

वत्सान् निवर्तयन्नपि स्वयमेव तेनात्मस्वरूपैः वत्सपैः तत्र चार्थे प्रयोज्यकर्तापि स्वयमेवात्मविहारैः क्रीडन्निति क्रियायाः कारकाणामपि स्वयमेवेत्यर्थः ॥ २० ॥ तत्तदात्मा गोपालरूपो भवन् तत्तत्सद्म प्रविष्टः गोपिकासोऽहं न मां हन् तन्मातरो वेणुरवेण त्वरयोत्थिताः सद्यः सुतानात्मापरं ब्रह्मैव दोर्भिः परिरभ्यात्यापयः स्तन्यं सुधा एव पयः स्वादुधावत्वाऽऽसवः स्वादुकं पायय

ततः किं तमित्यपेक्षायामाह तावदिति । वर्षजाते आत्मनो मानेन त्रुटिमात्रेणकालेन
सकलं सानुचरं हरिं ददर्श ४० कृष्णमायाकृतं यदित्याह यावन्त इति द्वाभ्यां मे मायाशये मायया
स्वे ४१ मन्मायामोहितेभ्यः इतरे कुत्रत्याः ४२ इति वितर्कयन्नास्त इत्यर्थः एवमेतेषु भेदेष्व
त्यपि याद्दशः ४३ ननु मायाश्रयस्य तस्य कुतो मोह इत्यत आह तस्यामिति महामायाविनि भा

तावदेत्यात्मभूरात्ममानेन त्रुट्यनेहसा पुरोवदाब्दं क्रीडन्तं ददृशे सकलं हरिं ४० या
वन्तो गोकुले बालाः सवत्साः सर्व एव हि मायाशये शयाना मे नाद्यापि पुनरुत्थिताः
४१ इत एतेऽत्र कुत्रत्या मन्मायामोहितेतरे तावन्त एव तत्राब्दं क्रीडन्तो विष्णुना समं ४२
एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचन ४३
एवं सम्मोहयन्विष्णुं विमोहं विश्वमोहनं स्वयैव माययाजोऽपि स्वयमेव विमोहितः
४४ तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि महतीतरमायैश्यं निहन्त्यात्मनि युञ्ज

॥ टी ॥

गवति अन्यमाया आवरणविक्षेपकत्वाभावे दृष्टान्तद्वयमाह तस्यां तमिस्रायां रात्रौ नैहारं
हिमकणप्रभवं तमस्तद्वत्तद्धिताण्प्रत्ययस्तस्यापि तमसा नैहारमिति विशेषणं क्षुद्रत्वाद् तत्ता
मो यथा स्वगावरणं न करोति किंतु तत्रैव लीयते यथा च खद्योतार्चिरह्नि पृथक् प्रकाशं
न करोति एवं महति पुरुषे प्रयुज्यमाना तत्प्रसरः इतरा नीचमाया न तत्र किंचित्करोति किंत्वात्मनि

श्रीमद्भागवतभावार्थदीपिकायां दशमे ॥ ५५

अजाद्यादिभिर्मायाविद्यादिभिर्विभूतिभिः शक्तिभिः महदादिभिरिति महत्स्तत्रयोः पृथग्वि
वलयचतुर्विंशतिभिः तत्वैर्जगत्कारणैः ५१ कालादिभिश्च तत्सहकारिभिः तत्र स्वभावः
परिणामहेतुः संस्कारः तद्बोधकः स्वमहित्वमहिमभिः भगवन्माहिम्नातिरस्कृतत्वात्तैः
सर्वैर्गुणमायैः ५२ सर्वेषामुत्पत्तिमत्त्वेऽपि विशेषमाह सत्यज्ञानेति सत्याश्च ज्ञानस्वरूपाश्च

गुणमायैर्महिमभिरजाद्यादिविभूतिभिः चतुर्विंशतिभिस्तत्वैः परीता महदा
दिभिः ५१ कालस्वभावसंस्कारकामकर्मगुणादिभिः स्वमहिध्वस्तमहिमभिर्मू
र्तिमद्भिरुपासिताः ५२ सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तयः अस्पृष्टभूरिमा
हात्म्या अपि ह्युपनिषद्दृशां ५३ एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान् य
स्य भासा सर्वमिदं विभाति सचराचरं ५४ ॥

अनंताश्च आनंदस्वरूपाश्च तत्रापि तदे
कमात्राः विजातीयसंभेदरहिताः तत्रापि चैकरसाः सदैकरूपा मूर्तयो येषां ते यद्वा सत्यज्ञाना
दिमात्रैकरसमेव ब्रह्मानंदवन्मूर्तिर्येषां ते अत एवोपनिषदात्मज्ञानेनैव दृक्चक्षुर्येषां तेषा
मपि निश्चिते अस्पृष्टभूरिमाहात्म्याः न स्पृष्टः स्पर्शो यस्य भूरिमाहात्म्यं येषां ते तथाभूताः
सर्वे व्यदृश्यन्तेति ५३ एवं सकृदेकदैव ददर्श परब्रह्मणो विशेषणं यस्येति ५४ ॥ ५६

अन्यदपि आश्चर्यमाह तावदिति वत्सपालाः वत्साश्च पालाश्च सर्वे यष्टिविषाणादयश्च ४६ श्रीवत्समभाङ्गदानि वङ्गदानि दोष्षु येषां रत्नमयानि कम्बुवत्त्रिरेखाणि कङ्कणानि पाणिषु येषां ते च ते च ४८ तथा भूरिबहुजन्मार्जितपुण्यं तद्युक्तैर्जनैरर्पितैः ४९ चन्द्रिका चन्द्रज्योत्स्नावद्विशदस्मितं तद्युक्तैः सहारुणेनापाङ्गेन च वर्तमाना येऽपाङ्गाः तैर्वीक्षितैः स्वकार्थानां

तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात् व्यदृश्यन्त घनश्यामाः पीतकौशे यवाससः ४६ चतुर्भुजाः शङ्खचक्रगदाराजीवपाणयः किरीटिनः कुण्डलिनो हारिणो वनमालिनः ४७ श्रीवत्साङ्गददोरत्नकम्बुकङ्कणपाणयः नूपुरैः कट कैर्भाताः कटिसूत्राङ्गुलीयकैः ४८ आङ्घ्रिमस्तकमापूर्णास्तुलसीनवदामभिः कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ४९ चन्द्रिकाविशदस्मेरैः सारुणापाङ्गवी क्षितैः स्वकार्थानामिव रजःसत्त्वाभ्यां स्रष्टृपालकाः ५० आत्मादिस्तम्बपर्यन्तैर्मूर्तिमद्भिश्चराचरैः नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः ५१ ॥

स्वभक्तमनोरथानां रजःसत्त्वाभ्यां स्रष्टृपालकाः स्वयं ब्रह्मणे प्रति मनसि तद्विशदस्मितेन पाल का इव रजोवद्गुणेन स्रष्टार इव तादृक्कटाक्षैर्वीक्षमाणा इत्यर्थः ५० आत्मा ब्रह्मा त दादि स्तम्बपर्यन्तैः अनेकार्हैः अनेकार्हणैः ५१ ॥

श्री॰ भा॰ द॰ सु॰ टी॰ ५८

ननु नो मीतिप्रश्नाय किं स्वरूपानुवादमात्रं क्रियते अत आह अस्यापीति भो देव अस्यापि स्थूल
भेदेन प्रकाशितस्यापि तव वपुषः अपरस्य महिमानमवसितुं तावत् कोऽपि को ब्रह्माहमपि
न ईशोऽनधिकोऽस्मि यद्वा कश्चिदपि नेशो न समर्थ आसीत् स्थूलभक्त्याद्यविशेषणाद्वयमदनुग्रह
स्य समस्तानुग्रहो यस्मात् तत् मदनुग्रहं तस्य किं स्वेच्छामयस्य स्वानां भक्तानां यथा यथेच्छा
तथा तथा भवतः तर्हि किमिति स्तोत्रेण शक्यते अत आह न तु भूतमयस्य अर्चित्य दृष्टा

अस्यापि देववपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि नेशो महित्ववसि
तुं मनसान्तरेण साक्षात्तवैव किमुतात्मसुखानुभूतेः २ रामायनमः

त्मकस्य यदा स्यैवं तदा कथं पुनः साक्षात्तवैव केवलस्यात्मसुखानुभूतेरेव स्वसुखानुभवैकमात्र
स्य अवतारादिगुणातीतस्य महिमानं अन्तःकरणेन निरुद्धेनापि मनसा को वा ज्ञातुं समर्थो भवेत्
अथवा भूतमयस्यापि विश्वविग्रहस्य पस्य तव त्रियस्य स्याः वपुषः महित्ववसितुं कोऽपि न ईशो तदा
साक्षात्तवैव असाधारणस्यात्मियस्यानिर्यत्नभेदरहितस्य उक्तलक्षणस्य अस्य महिम महिमानम
वसितुं नेशो इति किमुत वक्तव्यमित्यर्थः २ ॥ रामः

सवेपथुः सकंपः अत एव गद्गदया अनुकरणेन तल्लया वा चापलं तन्मे नः ६३ इति श्रीभावा
र्थदीपिकायां दशमे त्रयोदशः १३ चतुर्दशे कृतैः स्तोत्रैः स्वीयैरेकनिश्चये अनीशः कर्तुमत्तो
षीकृष्णब्रह्मविमोहितः स्वकृतापराधेन भिया सकंपस्तया भगवन्महिमानमनवगाहमानो
यथाहस्वरूपमेव कीर्तयन्नाह नौमीति हे ईड्य स्तव्य ते तुभ्यं नौमि द्वितीयार्थे चतुर्थी अथ

शनैरथोत्थाय विमृज्य लोचने मुकुंदमुद्वीक्ष्य विनम्रकंधरः कृतांजलिः प्रश्रयवा
न्समाहितः सवेपथुर्गद्गदयैलतेलया ६३ इति श्रीभागवते त्रयोदशोध्या
यः १३ ब्रह्मोवाच नौमीड्य तेभ्रवपुषे तडिदंबराय गुंजावतंसपरिपिच्छलसन्मु
खाय वन्यस्रजे कवलवेत्रविषाणवेणुलक्ष्मश्रिये मृदुपदे पशुपांगजा
य १ ॥

यानेनीत्युक्ताप्रकारेणागतस्य भगवतः कर्मत्वेनान्ये प्रयोजनापेक्षया एवंभूतो भगवानेव
प्रयोजनमिति तदर्थीयद्वा त्वत्तो ममेव प्रसादयितुं त्वामेवानौमीत्यर्थः अभ्रवद्वपुर्यस्य
तस्मै तडिदिव अंबरं यस्य तस्मै गुंजाभिरवतंसो कर्णभूषणं परिपिच्छं च बर्हापीडस्तैर्लसन्मु
खं यस्य तस्मै वन्याः स्रजो यस्य तस्मै कवलादिभिः लक्ष्मभिः श्रीशोभा यस्य तस्मै मृदू

श्री० भा० द० म० टी० ५५

एवं तावत्सगुणनिर्गुणयोरपि ज्ञानेऽहमिति तत्कथाश्रवणादिना त्वत्स्वामिनीन्यर्थेनाज्ञोऽस्ता
नीयच पिप्रभयोर्विशेषणद्वैतं यत्व सकाञ्च पापितृगणानीतस्यज्ञानेकर्थ्यं विद्यैवेतत् नतमगुणा
स्यानवस्त्वचिन्त्यानन्तगुणत्वादिति श्लोकद्वयेन तथापीति हे भूमन् अपरिच्छिन्न गुणगणस्य ते महि
मा अमलैर्मलैरात्मभिः अन्यद्वैतैरिन्द्रियैर्विवोढुं ज्ञातुमर्हतीति यद्वा विवोढुं बोधगोचरीकर्तुमर्हति
गोचरो भवति अथवा विवोढुं ज्ञातुमर्हति धर्षयितुमधिकानेत्यर्थः यद्वा महिमानं किं विवोढुमा
र्हतीत्यर्थः कथं स्वानुभवात् आत्माकारान्तःकरणमात्माकारात्तमन्वेतत् करणमपि सविका
रं विषयीकरोति कथमात्माकारतान्तः सोऽयन्तमाह अविक्रियादिति विक्रियाविषयाकारान्तर

तथापि भूमंस्त्वन्महिमा गुणास्ते विवोढुमर्हत्यमलैर्न तात्मभिः । अविक्रियात्स्वानुभवा
द्रूपतो ह्यनन्यबोध्यात्मतया न चान्यथा ६ राम:

हितात्तद्विशेषपरित्यागएवात्माकार इत्यर्थः ननु तं करणमात्माकारविषयत्वेऽनात्मत्वप्रसं
गः स्यात् अत आह अरूपतः निरूप्यविषयः अविषयत्वात् इति विषयत्वमेवात्मनो न फलविष
यत्वं अतो नायं दोष इति भावः कथं तर्हि स्फूर्तिः अनन्यबोध्यात्मतया स्वप्रकाशत्वेन न त्वन्यथा
इदं तदिति विषयत्वेनेत्यर्थः अथवा सर्वतोऽन्तरंगामलक्ष्मी गुणगणस्य ते महि महिमानं अ
मलैरन्तर्हेतुभिः इन्द्रियैरपि तत्प्यातात्स्वरूपत्वेन रूपेण विवोढुं किमर्हति नार्हतीति भावः कथं
तर्हि अर्हतीत्यत आह स्वानुभवादित्यादिना उक्तार्थमेवैतत् ६ ॥ राम:

57

श्री

ननु तर्हि कथमनन्ताः संसारं तरेयुः तत्राह ज्ञान इति ज्ञानसाधने प्रयासे प्रमनुदपास्य ईषदप्यकृत्वा स-
द्भिः मुखरितां स्वत एव नित्यप्रकटितां भवदीयवार्तां कथां स्वस्थान एव स्थिताः सन्तः तन्त्रविधिमात्रेणाहृतप-
वश्रुतिगतां श्रवणमार्गागतां तनुवाङ्मनोभिर्नमन्तः सत्कुर्वन्तो ये जीवन्ति यद्यपि केवलं नान्यत्कुर्वन्ति तैः प्रा-
यशः त्रिलोक्यामन्यैरजितोपि त्वं जितः प्राप्तोसीति किं ज्ञानश्रमेणेत्यर्थः ३ भक्तिं विना तु ज्ञानेन न सिद्ध्यद-
त्याह श्रेय इति श्रेयसामभ्युदयापवर्गलक्षणानां सृतिः स्रवणं यस्याः सरस इव निर्झराणां यथा वि-
धा ते भक्तिमुदस्य त्यक्त्वा श्रेयसां मार्गभूतामिति ये केवलबोधलब्धये यत्नं कुर्वन्ति तेषां क्लेशलवः क्ले-

ज्ञाने प्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीयवार्ताम् स्थाने स्थिताः श्रुतिग-
तां तनुवाङ्मनोभिर्ये प्रायशोजित जितोप्यसि तैस्त्रिलोक्याम् ३ श्रेयःसृतिं भक्तिमुदस्य ते वि-
भो क्लिश्यन्ति ये केवलबोधलब्धये तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषा-
वघातिनाम् ४ पुरेह भूमन्बहवोपि योगिनस्त्वदर्पितेहा निजकर्मलब्धया विबुध्य भक्त्यैव कथोपनीतया प्रपे-
दिरेञ्जोच्युत ते गतिं पराम् ॥ ५ ॥

शोप एवावशिष्यते अयं भावः यथाल्पश्रमाणां धान्यं वितुषजं श्रेत्तः कणहीनान् स्थूलान्धान्याभा-
सान्तुषान्ये घ्नन्ति तेषां न किंचित्फलमेवं भक्तिं त्यक्त्वा ये केवलबोधाय प्रयतन्ते तेषामपीति
४ भक्त्यैव ज्ञानं प्राप्यते नान्यथेत्यत्र सदाचारं प्रमाणयति पुरेति हे भूमन् अपरिच्छिन्न इह लोके पूर्वं योगि-
नोपि सन्तः योगेनैव मया प्राप्यः पश्चात्त्वदर्पितेहाः त्वय्यर्पिता लौकिकी वैदिकी च ईहा चेष्टा यैः ते निजकर्मल-
ब्धया त्वय्यर्पितेहा च निजकर्माणि तैर्लब्धया इति एकपदं वा कथोपनीतया त्वत्कथोपप्रापितया
भक्त्यात्मानं विबुध्य ज्ञात्वा अंजः सुखेनैव ते परां गतिं प्रापुः ५ ॥

गुणानामात्मनः गुणाधिष्ठानस्य तेन च गुणान्विमातुमेतावन्त इति ज्ञातुं क ईशिरे के समर्था बभूवुः इ
रतस्तु हि पोषवातीर्णस्य भूतस्य तस्य तवास्य विश्वस्य हिताय पालनाय बहुधा गुणाविष्कारेणाव
तीर्णस्य तव तु कालेन गुणाः किमशक्यमत आह कालेनेति वा पाठो विकल्पः सुकल्पैरिति निपुणैः
बहुजन्मना कालेन भूपरमाणवो विमिताः विशेषेण गणिता भवेयुः तथा खे मिहिका हिमकणाश्च
पि तथा द्युभासः दिवि नक्षत्रादिकिरणपरमाणवोऽपि तस्मादनन्तैर्गुणैर्गत्या हृतास्तेरिति ६ स

गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य कालेन यैर्वा विमिताः सुक
ल्पैर्भूपांसवः खे मिहिका द्युभासः ७ तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं वि
पाकं हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ८ पश्येश मेऽनार्य
मनन्त आद्ये परात्मनि त्वय्यपि मायिमायिनि मायां वितत्येक्षितुमात्मवैभवं ह्यहं कि
यानैच्छमिवार्चिरग्नौ ॥ ९ ॥

समीक्षमाणः कदा भविष्यतीति बहु मन्यमानः स्वार्जितं च कर्मफलमनासक्तः सन्भुञ्जान
एव नातीव तत्प्रशान्त्यर्थं यतन् एवं यो जीवेत स मुक्तौ दायभाक् भवति भक्तस्य जीवनमा
त्रमेव तत्र दायाद्यर्थं किमपि नापेक्षितम् इति भावः ८ तदेवं स्तुत्वा भगवतः तत्समायाव्य
तिरेकेणाद्यप्रमाद्विमुक्तो नान्यद्व पश्यन्तीति भावः ऐश्वर्यं द्रष्टुं
ते मायया यो निवेदयति हे ईश मे अनार्यं दौर्जन्यं पश्य यदहं मायिनामपि मायिनि त्वयि मोहि
न्यपि त्वयि मायया सा यां प्रमार्यैश्वर्यं द्रष्टुमैच्छमभिलषितवान् अग्नौ एव किंतेन यद्यहं कि
यान्न किंचित् यथाग्नेरुरुज्वालस्य यथाग्नौ न किंचित्तद्वदिति ९ ॥

नहि नारायणस्य पुत्रः तस्याः मम किं मायेति तत्राह नारायणस्त्वमिति न सीति काका त्वमेव
नारायणत्वमुपपादयति कुतोहं नारायण इति चेत्तत्राह सर्वदेहिनामात्मासि यत्वमपि किं ना
रायणो न भवसि नारं जीवसमूहः अयनमाश्रयो यस्य स त्वमेवेति त्वमेव सर्वदेहिनामात्मातो ना
रायण इति भावः हे अधीश त्वं नारायणो न हीति पुनः काका अधीशः प्रवर्त्तकः तत्त्वं नारा
स्यायने प्रवृत्तिर्यस्मात्तत्त्वमिति पुनस्त्वमेवासीति किंच त्वमखिललोकसाक्षी अखिललो
कं साक्षात्पश्यति अतो नारमयसे जानासीति त्वमेव नारायण इत्यर्थः ननु वेदे नारायणपद

नारायणस्त्वं न हि सर्वदेहिनामात्मास्यधीशाखिललोकसाक्षी नारायणोङ्गं नर
भूजलायनात्तच्चापि सत्यं न तवैव माया १४ मम ॥

वृत्तं श्रीमद्वेदे तत्त्वन्यथा प्रसिद्धमित्याशंक्याह नारायणोङ्गमिति नराद्भूता ये अर्थाः च
तुर्विंशतितत्त्वानि तथा नाराः नराज्जातं जलं तदयनाद्यो नारायणः प्रसिद्धः सोपि तवैवाङ्गं
मूर्तिः तथा च स्मर्यते नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः तस्य तान्ययनं पूर्वं तेन
नारायणः स्मृत इति तथा आपो नारा इति प्रोक्ता आपो वै नरसूनवः अयनं तस्य ताः पूर्वं तेन ना
रायणः स्मृत इति च न तु मन्तव्यं तैः परिच्छिन्नाः कथं जलाद्ययनत्वमत आह तच्चापि सत्यं नेति।



61

अपि च न केवलं जनन्याः समायिनस्यैव दर्शितैस्त्वा हृद्ग्रथैवेति नहिसौवोविनागस्यविष्ठ
स्यमायात्वं यत्तत्तया ममैव तत्तद्रूपैर्विकिनदर्शितमेव तथाह्येकोसीत्यादि ततोमा
यासद्वाविलेत्तमादिभिर्हृपासिताः तावन्तः चक्रभंजाप्रभृतिजगत्तिब्रह्माण्डानीति प्रागतत्ता
मपि हृष्टमितिज्ञातव्यं १८ नत्वब्रह्मणस्त्वनमयादर्शितं गुहृमेवचेतन्यकथं अप्रपंचवत्त
मायैस्तूच्यते सत्यं किंत्वग्रहितायेत्वयिनानात्वंगुणावतारमतत्त्यापवत्तोशष्ठिवकार्यवशो

दृष्टेवत्वहतोऽस्याः किं समनन्तमायात्वमादर्शितमेकोऽसि प्रथमं ततो अजसहृदवास्याः
समस्ताअपि तावन्तोऽसि चक्रभंजात्वद्ग्विलेः सार्कं मयोपासिताः तावन्त्येव जगं
तिकत्वद्मितब्रह्माद्वयैर्पिधीते १८ अज्ञानतोवात्यद्वीमनात्मन्यात्मनात्मना
भासि विततयमायो हृष्टाविवाहेजगतो विधानेत्वमेषोऽन्तिवत्रिनेत्रः १९ ॥

नत्वतेत्रमायानिबंधनमित्याह श्लोकद्वयेन अज्ञानतामितित्वत्पदवीत्वस्वरूपमजानन्तो
अनात्मनिप्रकृतिस्थितः आत्मैवतेआत्मनैवस्यातेऽयःमायोविततयाभासिकथं
जगतः स्रष्टौ अहमिवब्रह्मैवविधानेपालनेपषत्वमिवअन्तेत्रिनेत्र
इव १९ रामायनमः ॥



62

श्री॰
भा॰ द॰
पू॰ टी॰
६४

नन्वात्मनि कल्पस्यैव किमिति बन्धमोक्षौ नेतीति तत्राह अज्ञानसंज्ञाविति अज्ञानेन संज्ञा
ययोस्तौ भवबन्धमोक्षौ भवे बन्धस्तन्मोक्षश्चेति द्वौ नाम प्रसिद्धौ ऋतज्ञभावात् ऋतज्ञानी
तज्ज्ञभावः तस्मादन्यौ न स्तः ननु कथमज्ञानपलापः क्रियते परमार्थविचारादित्याह अ
जस्रेति अजस्रचिन्मात्ररूपेण परिपूर्णे आत्मनि निरज्ञानेन च बन्धः अतएव ज्ञानात्तावेतौ तरणाविव
वाह्नी इवेति ४६ ननु परमार्थज्ञानाज्ज्ञानकृतौ बन्धौ निवर्तेतां आत्मा त्वत्र एव तावत्

अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् अजस्रचित्यात्म
नि केवले परे विचार्यमाणे तरणाविवाह्नी ४६ तमात्मानं परं मत्वा परमात्मा
नमेव च आत्मा पुनर्बहिर्मृग्य अहो अज्ञजनज्ञता ४७ ॥

नास्तीति कोऽयमाग्रह इत्याशंक्याह यदध्यासादात्मनः परस्वरूपास्फूर्तिः तदपवादेन तस्यै
वात्मस्वरूपेणानेयुक्तमिति समर्थविस्मयपूर्वकोऽभिवाहत्वामिति तमात्मानं परं दे
हादिभ्यो मत्वा आत्मनि देहादिमध्यास्य तत्प्रत्यापरं देहादि आत्मानं मत्वा देहादावात्मानम
ध्यस्य पुनः अहं आत्मा बहिर्मृग्य इति चित्ते न हि देहे नष्टे वस्तुतनेन गम्यतः इत्यर्थः ४७ ॥



64

श्री
भा॰द॰
टी॰
६५

तत्रस्मात् भूरिभागः सुभाग्यं अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये वा जन्मनि तस्मिन्नपि येन भाग्येन भवदीयानां जनानां एकोपि यः कश्चिदपि भूत्वा निषेवे अत्यर्थं सेवे ॥२९॥ यद्देवा द्विजन्मनोपि यत्र जन्म विन्दन्ति मज्जन्मैव श्रेष्ठमित्याशयेनैतत् समभिः श्लोकैरभिनन्दति अहो इति धन्याः स्त्र्यादिभिः व्रजगोरमण्यः व्रजस्था गावो गोप्यश्चातिधन्याः यासां त्वया वत्सतरात्मजात्मना वत्सानामात्म

तदस्तु मे नाथ स भूरिभागो भवेत्र वान्यत्र तु वा तिरश्चां येनाहमेकोपि भवज्जनानां भू
त्वा निषेवे तव पादपल्लवं ॥२९॥ अहोतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते
मुदा यासां विभो वत्सतरात्मजात्मना यत्तृप्तयेद्यापि न चालमध्वराः ॥३०॥ अहो भाग्य
महो भाग्यं नन्दगोपव्रजौकसां यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥३१॥ यामः

त्मनां च रूपेण यस्य स्तनवत् अमृतं ये सर्वेपि यज्ञा अद्यापि न शक्ताः तेन त्वया अतितृप्त्यर्थं त्वया स्तो स्तन्यमृतं तद्रूपे पीतमिति ॥३०॥ तत्र भगवत्सख्यानां महिमा वक्तुं तावच्च न शक्यते इत्याह अहो इत्यादि पूर्णतत्वाभाग्यस्य सर्वापरिच्छिन्नत्वमुक्तम् किंच ॥३१॥ यामः

65

विवेकिनस्तु प्रत्यक्तत्त्वरूपत एव परमात्मानं विचिन्वंतीत्याह अंतर्भवे इति भवे भवतीति भवः चि
त्तात्मके शरीरे जन्मप्रभृत्येव मृगयंतीति यतः अतत्त्यजंतः अपवदंतः ननु सतो ज्ञानेनाले
किमसतोऽपवादेनेत्याशंक्याह अतत्त्वापवादं विनाधिष्ठानतत्त्वं न ज्ञायते इति सत्यव्यवहारे
णाह असंतमिति अंति समीपे असंतमप्यहिमंतरेण तन्निरासं विनेत्यर्थः संतं गुणं रज्जुं संतः
किमु यंति जानंतीति संतमपि गुणं इति वा न जानंतीत्यर्थः तस्मादात्मतत्त्वेऽवस्तूनां निराकृतिरि

अंतर्भवेऽनंत भवंतमेव ह्यतत्त्यजंतो मृगयंति संतः । असंतमप्यंत्यहिमंतरेण सं
तं गुणं तं किमु यंति संतः २८ अथापि ते देव पदांबुजद्वयप्रसादलेशानुगृहीत
एव हि जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥ २९ ॥

तिभावः २८ नन्वेवं ज्ञाने नैकमार्गे मोक्षे किमिति भक्तिरपेक्षिता अत आह अथापीति यद्य
पि ह्यात्मविज्ञानमस्ति तथापि हे देव तव पादांबुजद्वयस्यैकदेशस्यापि यः प्रसाद
लेशः तेनानुगृहीत एव भगवतः तव महिम्नः तत्त्वं जानाति हे भगवन् तव महिम्नः तत्त्व
मिति वा एकोऽपि कश्चिदपि चिरं विचिन्वन् अतदपापवादेन विचारयन्नपीत्यर्थः २९ ॥

श्री॰
भा॰ द॰
टी॰ टी॰
६६

अतोमयाप्रार्थितंतदलमेनाथमभूरिभागधेयमेवाह तद्भूरिभाग्यमितिकिंतदिहम
नुष्यलोकेयत्किमपिजन्मतत्राप्यटव्यांयत् तत्रापिगोकुलेयत्अहोमनुष्यलोकेविहाया
अजन्मनिजातेकोलाभस्तत्राह अपिकतमोऽङ्घ्रिरजोऽभिषेकमितिगोकुलवासिनांमध्ये

तद्भूरिभाग्यमिहजन्मकिमप्यटव्यांयद्गोकुलेऽपिकतमाङ्घ्रिरजोऽभिषेकं
यज्जीवितंतुनिखिलंभगवान्मुकुन्दस्त्वद्यापियत्पदरजःश्रुतिमृग्य
मेव ३३ गमः ॥

पिकतमस्ययस्यकस्याप्यङ्घ्रिरजसाअभिषेकोयस्मिंस्तत् नतुगोकुलवासिनएवकृतोऽप
न्यः तत्राहयदितितेषांजीवितंनिखिलंमुकुन्दः इतिमुकुन्दःपरमेवजीवितमित्यर्थः दुर्लभता
माह अद्यापीतिश्रुतिमृग्यंवेदैरपिमृग्यंतेएवननुद्दृश्यन्ते इत्यर्थः अहो
तेषांभाग्यंयेनतत्सत्पदंपश्यन्ति ३३ गमः ॥

एतेषां सोपानानां गोपीनां च भाग्यमहिमा तावदास्तां लोकस्तेन वक्तुं शक्नोति पार्वति यः पार्वतौ
हेकारादिष्टात्ता आदिर्यं सो चेन्द्रादीनां प्रकादप्रपनां तेन प्रावयेच्चद्वयमित्यात्मानमेव वक्तुमन्य
मानश्चाह एवं मनोऽभुक्ष हेकारचन्द्रगाघधिष्टात्तारः श्रयोद यादेवाः तावत्तवत्तश्रेष्ठो भूरिभा
गाः यस्मादेतेषां हृषीकाणि इन्द्रियाण्येव चषकानि पानपात्राणि तैः तैत्तवचतर्द प्रास्यचित्ताधिष्ठा

एषां तु भाग्यमहिमाच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः
एतद्धृषीकचषकैरसकृत्पिबामः शर्वादयोऽङ्घ्र्युदजम
ध्वमृतासवं ते ३३ ॥ रामः

ननु श्रेष्ठी एवं इन्द्रजे सरोजे तत्पो मे भ्रमकरेन्दः तदेवामततेस्याङ्गश्चामसवेमादकेपिबामः एतद्
क्तेभवति यदाष्टन्येकमिन्द्रियाभिमानिनो वयं कीर्तिसौन्दर्यं सौगन्ध्याद्यैकैकदेश
मेविनो विकतार्थ्यां तदा सर्वेन्द्रियैः सर्वमेविनामेतेषां ब्रजवासिनो
किं वर्ण्यं ते भाग्यमिति ३३ ॥ रामः

नन्वेतावंतं कालं कथं तैस्तत्रोपविष्टाः कथं च तत्र स्थिता यस्माद्विस्मरणमत आह एकस्मिन्निति
श्लोकद्वयेन अब्देऽपि याते प्राणेशं क्षणमेतमपि विनापि प्रियविरहे तत्रापि च बालका भवा
न्तित्व्यापि मायाहताः क्षणार्धं मेनिरे ४२ यया मायया मोहितं जगत् अभीक्ष्णं पुनः पुनर्वि
स्मृतात्मकं विस्मृतआत्मस्वरूपं तत्तया ४३ अपि एकमपि कवलं नैव भुक्तं तेन या अतिवेगेन स्वागतं ते सम्य

एकस्मिन्नपि याते ऽब्दे प्राणेशं चांतरात्मनः कृष्णमायाहता राजन् क्षणार्धं मेनिरेऽर्भकाः
४२ किं किं न विस्मरंतीह मायामोहितचेतसः यन्मोहितं जगत्सर्वमभीक्ष्णं विस्मृता
त्मकं ४३ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा नैकोऽप्यभोजि कवल एहीतः सा
धु भुज्यतां ४४ ततो हसन् हृषीकेशोऽभ्यवहृत्य सहार्भकैः दर्शयंश्चर्माजगरं न्यवर्तत
वनाद्व्रजम् ४५ बर्हप्रसूननवधातुविचित्रितांगः प्रोद्दामवेणुदलशृंगरवोत्सवाढ्यः
वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठं ४६ ॥

गागते वत्साः किं समीपे भवंतु एकोऽपि ग्रासः त्वां विना अस्माभिर्न भोजि न भुक्तः अत एहि साधु प्र
विशेषेण भुज्यतामिति ४४ अभ्यवहृत्य भुक्त्वा ४५ प्रोद्दामो यो वेणुर्वादित्रविशेषस्तेनाढ्यः
संपन्नः गृणन् उपलालयन् गृह्णन् गोपीदृगुत्सवदृशिः गोपीनां दृशामुत्सवरूपा दृशिर्दर्शनं य

६०

श्री॰
भा॰ द॰
पू॰ टी॰
६९

तंदेहमनुभवंतियेपुत्रादयस्तेतुनतथाप्रियतमाःयथात्मवादिनांदेहइत्यर्थः ५१ यद्यस्मा
ज्जीर्यत्यपिअस्मिन्मरणेपिजीविताशाभवति अयंभावः नजीविष्यामीतिनिश्चितेपिदेहेप्र
प्रेमास्पदत्वेनतदात्मगतमेवममेत्यावृत्तेरिति अथवायद्यस्मिन्देहेजीर्यत्यपिजीविताशाऽविवे
कतृष्णायामस्तिसापिविवेकिनोयदाममताभावभवतितदाआत्मवत्प्रियोनभवति अतस्ता

देहात्मवादिनांपुंसामपिराजन्यसत्तम यथाप्रियतमोदेहस्तथानह्यनुयेचतं ५१ देहो
पिममताभाक्चेत्तर्ह्यसौनात्मवत्प्रियः यज्जीर्यत्यपिदेहेस्मिन्जीविताशाबलीयसी
५२ तस्मात्प्रियतमःस्वात्मासर्वेषामपिदेहिनां तदर्थमेवसकलंजगदेतच्चराचरं
५३ कृष्णमेनमवेहित्वमात्मानमखिलात्मनां जगद्धितायसोप्यत्रदेहीवाभातिमा
यया ५४ वस्तुतोजानतामत्रकृष्णंस्थास्नुचरिष्णुच भगवद्रूपमखिलंनान्यद्वस्त्विह
किंचन ५५ ॥ रामः ॥

त्रनातीवास्थितितदर्थमेवसकलंप्रियमित्यर्थः ५२ अतस्तमाहकृष्णमेनमिति नकेवलं
मात्मनात्माअपितुजगतामपीत्याह ५४ वस्तुतइतिसर्वंजगत्कारणमितिकृष्णंजानतांतु
मोस्थावरंजंगमंचसर्वंभगवद्रूपंभगवानेवस्वरूपंयस्यतत्तेनानान्यत् ५५ ॥ रामः

रामः

69

यशोदानंदसूनुनेति यद्वा यशोदानंदयतीति यशोदानंदः स चासौ सूनुश्चेति यद्वा यशोदायाश्चा
नंदरूपः सूनुः तेनाम्ना लालनाद्यालोडयमविता रक्षिताः ४७ प्रागुक्तेन प्रश्नोक्तसास्वतोकेषु स्वे
द्भवेष्वपि नेति श्रीमवहल्येयथा कृष्णे न पूर्वं बहिरित्यादिना स्वतोकेन भ्योऽपि परपुत्रे श्री
कृष्णे प्रेमाधिक्यमसकृदनुबद्धमित्युक्तमिति ४८ श्रीकृष्णस्य सामान्यादात्मत्वात्तस्मिन्नात्मनीयेभ्यं

प्रयाने महाव्यालो यशोदानंदसूनुना हतोऽविता वयं चास्मादिति गोपा व्रजेनृपः
४७ राजोवाच ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत् योऽभूतपूर्वस्तोकेषु स्वो
द्भवेष्वपि कथ्यतां ४८ शुकउवाच सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः इतरे
ऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ४९ तद्राजेंद्र यथा स्नेहः स्वस्वकात्मनि देहिनां
न तथा ममतालंबिपुत्रवित्तगृहादिषु ५० ॥

प्रेमादिकं पुत्रादेष्विति वक्तुं प्रथमं तावदात्मनः सर्वतः प्रेष्ठतमः अन्येषां तु तदुपाधिकमिति
दर्शयति पंचभिः इतरे तद्दर्शनादित्याहतदिति ४९ तस्मादेवकारणात् स्वस्वकात्मनि
अहंकारास्पदेऽपि देहे आत्मताध्यासतारतम्येन प्रेमतारतम्यं दृश्यमानेन निर्वेपनमेवेतिद
र्शयितुं नृपकाममलभेदेन विशेषमाह देहात्मवादिनामिति द्वाभ्यां ५० रामः ॥

श्री
भा०द०
स्कं०टी०
११

अघार्दनमघासुरवधःशाद्वलेजेमनंभोजनंचव्यक्तेतरंतद्व्यक्ताजनप्रपंचादितरंतद्रूपमत्वात्सके
वत्सपालरूपंब्रह्मव्यक्तेतरश्चिद्विलासः संभूयनेइतिरूपंव्रजस्यब्रह्मणःउक्तमहानभिष्टवःतेषु
सकतांस्ततिमेननस्तूयवेनस्तूयाणाश्रःसर्वेषुरूपघाप्यानामोति ५५ इतिश्रीपरमानंदनृसिंहपदद्व
यद्वंद्वःव्याकरोत्श्रीधरस्वामीयथामतिविधिस्ततिम् ६ दशमस्कंधेचतुर्दशोध्यायः १४ त

एतत्सुहृद्भिश्चरितंमुरारेरघार्दनंशाद्वलजेमनंच व्यक्तेतरद्रूपमजोर्वभिष्टवंशृण्वन्गृण
न्नेतिनरोखिलार्थान् ५५ एवंविहारैःकौमारैःकौमारंजहतुर्व्रजे निलायनैःसेतुबंधैर्म
र्कटोत्प्लवनादिभिः ६ इतिश्रीभागवतेदशमस्कंधेब्रह्मस्तुतिर्नामचतुर्दशोध्यायः
१४ श्रीशुकउवाच ततश्चपौगंडवयःश्रितौव्रजेबभूवतुस्तौपशुपालसम्मतौ गाश्चारयंतौ
सखिभिःसमंपदैर्वृंदावनंपुण्यमतीवचक्रतुः १ ॥

ततःपंचदशेधेनुपालनंधेनुकार्दनं कालियक्ष्वेडतोगोपरक्षणंचनिरूप्यते पौगंडेसत्तनोपीसाकौ
मारेस्वत्सकादिकान् पौगंडेवृंदावनगोमहत्त्वमदमहानलः अहिवक्त्रप्रवेशेनहृष्यादिवित्रानन्भी
तानःकृष्णःप्रावेशयत्पक्वफलतालादिकानने पशुपालसम्मतौपशुपालेनसम्मतौपशुपाल
नोद्यासमतौरेखेहृयोबलातिरेकमनुक्त्वावत्सपालनिवृत्त्यर्थाः पुण्यंतीवपुण्यंपदैरंकनैश्चक्रतुःसर्वतः

10

११

ऊतइति तदाह सर्वेषामिति भावार्थः परमार्थः भवति भवत्परिणामि प्राग्भवत्कारणं तस्मिन् भवति स्थितः तस्यापि भवतः कारणस्यापि भगवान् श्रीकृष्णो भवकारणं अतः किं एतत् श्रीकृष्णवस्तु रूप्यतां ५६ तस्मात् श्रीकृष्णस्यैव परमार्थत्वात्तदेकशरणानामयत्नतो सिद्धो मोक्ष इति प्रकरणार्थमुपसंहरति समाश्रिता इति पुण्यं यशो यस्य सः पुण्ययशाः तस्य मुरा

सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्य
तां ५६ समाश्रिता ये पदपल्लवप्लवं महत्पदं पुण्ययशो मुरारेः भवाम्बुधिर्वत्सप
दं परं पदं पदं पदं यद्विपदां न तेषां ५७ एतत्ते सर्वमाख्यातं यत्पृष्टोहमिह त्वया य
त्कौमारे हरिकृतं पौगण्डे परिकीर्तितं ५८ ॥

रिभुतस्य पादपल्लवप्लवः ते ये सम्यगाश्रितास्तेषां महत्पदं महत्तां पदं आश्रयं येषां महत्त्व तत्पदं चेति तत्र ख्यातेषां भवाम्बुधिर्वत्सपदमात्रं भवति किंच परं पदं श्रीवैकुण्ठाख्यं पदं स्थानं भवति विपदां यत्पदं विषयः तत्तु नः कदाचिदपि तेषां न भवति न ततः पुनरावर्तन्त इत्यर्थः ५७ एतत्तसद्भिर्गिरिति सहृद्भिः चरितं मुक्तमन्योन्यं पिक्यादीनित्याह द्विनोक्तं ५८ ॥

ह्येषनघवने गूढमपि त्वां न त्यजन्ति नयिमञ्जुष्याद्वेषेण नहि गूढे सति मुनयोपि भ्रमरवेषेण निगू
ढात्मानं भजन्तीत्यर्थः ३ इत्यानन्दितमनास्तां सर्गः स्वभावशिवदेति यद्वत्तिप्रियं वनस्थास्मिन्नृ
हमागताय मह्यं ते समर्पयन्तीति ४ तृणवीरुधस्त्वत्पादस्पृशो नितरां तथा करजाभिमृष्टाः

एतेऽलयः तव यशोऽखिललोकतीर्थं गायन्त आदिपुरुषानुपदं भजन्ते प्रायो अमी मुनि
गणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ५ नृत्यन्त्यमी शिखिन ईड्य मु
दा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन सूक्तैश्च कोकिलगणा गृहमागताय ध
न्या वनौकस इयान्हि सतां निसर्गः ६ धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रु
मलताः करजाभिमृष्टाः नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि
यत्स्पृहा श्रीः ७ एवं वृन्दावनं श्रीमत्कृष्णः प्रीतमनाः पशून् रेमे संचारयन्नद्रेः सरिद्रो
धःसु सानुगः ८ क्वचिद्गायति गायत्सु मदान्धालिष्वनुव्रतैः उपगीयमानचरितः स्र
ग्वी संकर्षणान्वितः ९ ॥

रसैर्नैवैः स्पृष्टाः सदयैरवलोकनैः श्रीरपि यत्स्पृहयति केवलं तेन भुजयोरन्तरेणावक्षसा गोप्यो
धन्या इति ७ एवं श्रीमद्वृन्दावनं प्रतिप्रीतः सन् अद्रेः समीपवर्त्तिसरिद्रोधःसु गाः संचारयन्सानु
गो लोकप्रसिद्धाभिः क्रीडाभिः प्रीतमना रेमे ८ तामेव रतिमाह क्वचिदिति दर्पणाभिः ९ ॥

स्वयपोषणाद्भिः तद्वने प्राविशत् १ तद्वने गिरीत्य भगवान् श्रीकृष्णोरेतमनोदये कर्ण्ये भूते
वनेमञ्जुघोषायेऽलिमृगद्विजाः भ्रमरमृगसरः आश्रयत्वेनास्ति यत्र तेन वातेनेति प्रोत्यम्
कृपातयत्रगोधिना परिमलत्वद्वेष्टवनमिति मान्यमुचितम् पतिशणोः तैराकुलत्वात्मेमहन्म
नः प्रव्यपयः सरस्वता महत्तामनमः प्रख्योतल्पत्वकुपयोपमिन्त्तत् २ पुष्कणपल्लवश्रि

तन्माधवो वेणुमुदीरयन्वृतो गोपैर्गृणद्भिः स्वयशो बलान्वितः पशून्पुरस्कृत्य पशव्य
माविशद्विहर्तुकामः कुसुमाकरं वनं १ तन्मञ्जुघोषालिमृगद्विजाकुलं महन्मनः
प्रख्यपयस्सरस्वता वातेन जुष्टं शतपत्रगन्धिना निरीक्ष्य रन्तुं भगवान्मनो दधे २ स
तत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः स्पृशच्छिखान्वीक्ष्य वनस्प
तीन्मुदा स्मयन्निवाहाग्रजमादिपूरुषः ४ श्रीभगवानुवाच अहो अमी देववराम
रार्चितं पादाम्बुजं ते सुमनःफलार्हणम् नमन्त्युपादाय शिखाभिरात्मनस्तमोपहत्यै तत्क

णमहस्यपर्णेत्यः शिखाः शिखाग्राणि येषां तान्वीक्ष्याग्रजं बलं प्रत्याह ४ तरुजन्म येन कृ
तेन तस्य तमसः पापस्यापहत्यै नाशाय अथवा येन तरुयोन्यां शरणं सर्वोपकारकं तरुजन्म कृ
तेपादाम्बुजस्य प्राप्त्यर्थं ज्ञानमेतिपदे ज्ञातचेपि जन्मनि यद्ज्ञानरूपं तमोस्ति तस्यापहत्यै
किंकृत्वा सुमनःफलार्हणं विधाय ५ ॥

१९ भावेष्टितमेवदर्शयितुमाह श्रीदामेति स्तोककृष्णाकश्चित् २१ तालालिसंकुले तालपंक्तिभिः

श्रीदामा नाम गोपालो रामकेशवयोः सखा सुबलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन्
२० राम राम महाबाहो कृष्ण दुष्टनिबर्हण इतो ऽविदूरे सुमहद्वनं तालालिसंकुलं २१ फला
नि तत्र भूरीणि पतन्ति पतितानि च सन्ति किन्त्ववरुद्धानि धेनुकेन दुरात्मना २२ सो ऽतिवी
र्यो ऽसुरो राम हे कृष्ण खररूपधृक् आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः २३ तस्मा
त्कृतनराहाराद्भीतैर्नृभिरमित्रहन् न सेव्यते पशुगणैः पक्षिसंघैर्विवर्जितं २४ विद्यन्ते ऽभु
क्तपूर्वाणि फलानि सुरभीणि च एष वै सुरभिर्गन्धो विषूचीनो ऽवगृह्यते २५ प्रयच्छ तानि
नः कृष्ण गन्धलोभितचेतसां वाञ्छास्ति महती राम गम्यतां यदि रोचते २६ एवं सुहृद्वचः
श्रुत्वा सुहृत्प्रियचिकीर्षया प्रहस्य जग्मतुर्गोपैर्वृतौ तालवनं प्रभू २७ बलः प्रविश्य
बाहुभ्यां तालान्संपरिकम्पयन् फलानि पातयामास मतंगज इवौजसा २८ फलानां प
ततां शब्दं निशम्यासुररासभः अभ्यधावत्क्षितितलं सनगं परिकम्पयन् २९ समेत्य तर
सा प्रत्यग्द्वाभ्यां पद्भ्यां बलं बली निहत्योरसि काशब्दं मुञ्चन्पर्यसरत्खलः ३० रामः

र्षामम् २१ विषूचीनः सर्वतः प्रसृतः २५ सनगं सवृक्षम् २९ ३० प्रत्यग्द्वाभ्यां पश्चिमाभ्यां
द्वाभ्यां पद्भ्यां काशब्दमिति गर्दभजातिशब्दानुकरणं पर्यसरत् परितो ऽधावदित्यर्थः ३० ॥



12

बर्हिणो नृत्यन्तमनु अभिनृत्यति बर्हिणामभिसेकं वेनृत्तीति वा सखीन्हासयन् आनंदयन् ११ चकोरादीन् अनुकूजन्रौतीति कदाचित् सत्त्वानां मध्ये व्याघ्रसिंहयोः ताभ्यां भीतवद्भवति सत्त्वेषु पलायमानेषु स्वयं पलायते तस्य पश्चात् तयोः सत्त्वानां च वल्लीदृक्काणां भीतवद्भवती त्यर्थः इति वा १२

क्वचिच्च कलहंसानामनुकूजति कूजितं अभिनृत्यति नृत्यन्तं बर्हिणं हासयन्क्वचित्
११ मेघगम्भीरया वाचा नामभिर्दूरगान्पशून् क्वचिदाह्वयति प्रीत्या गोगोपालमनोज्ञ
या: १२ चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिं
हयोः १३ क्वचित्क्रीडापरिश्रान्तं गोपोत्सङ्गोपबर्हणं स्वयं विश्रमयत्यार्यं पादसंवाहना
दिभिः १४ नृत्यतो गायतः क्वापि वल्गतो नृत्यतो मिथः गृहीतहस्तौ गोपालान्हस
न्तौ प्रशशंसतुः १५ क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः वृक्षमूलाश्रयः शेते
गोपोत्सङ्गोपबर्हणः १६ पादसंवाहनं चक्रुः केचित्तस्य महात्मनः अपरे हतपाप्मा
नो व्यजनैः समवीजयन् १७ अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः गायन्ति स्म म
हाराज स्नेहक्लिन्नधियः शनैः १८ एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरि

आर्यं मय्यजे विश्रमयति विगतश्रमं करोति १४ नृत्यादीन् कुर्वतो गोपान् मिथः प्रशंसतुः व्यजनैः पल्लवादिभिर्निर्मितैः १७ ईशचेष्टितमिति निगूढस्वभावत्वेपि ग्रन्तर्ईशस्य चेष्टितानि

गो॰ टी॰ स॰ ग्रं॰ स्य व॰ ल्ली प॰ ञ्चे॰ शि: १४ ॥

श्रीमद्भागवते दशमस्कन्धे पञ्चदशो ऽध्यायः

श्रीधरी॰ ७२ ॥

गोरजोभिः छुरितेषु कुन्तलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च तं चाते च दिदृक्षितदृशः दिदृक्षिता दर्शनोत्कण्ठायुक्ता दृशो यासां ताः ४२ मुकुन्दस्य मुखमेव सारघं

कृष्णः कमलपत्राक्षः पुण्यश्रवणगोचरः स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमागतः ४१ तं गोरजश्छुरितकुन्तलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासं वेणुं क्वणन्तमनुगैरुपगीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेताः ४२ पीत्वा मुकुन्दमुखसारघमक्षिभृङ्गैस्तापं जहुर्विरहजं व्रजयोषितोऽह्नि तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदपांगमोक्षं ४३ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले यथाकालं यथाकामं व्यधत्तां परमाशिषः ४४ गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः नीवीं वसित्वा रुचिरां दिव्यस्रग्गन्धमण्डितौ ४५ जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ संवेश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ४६ रामः

ते सारघं मधु अक्षिभ्यां विरहात् तस्माज्जातं तापं सचता सोमसत्कृतिं सलज्जो काच सत्कृतिः कथं वा कृतवतामाह सव्रीडेति सलज्जं हासं तेन विनयो यथा भवति तथा यदेतत् तत् किंचापांगमोक्षं कटाक्षदर्शनं तथा तां सत्कृतिमाप्येत्यर्थः ४३ ॥

13

उपक्रोष्टा गर्दभः पराक् प्रतिमुखः अपरौ पश्चिमौ बलाय बलं हंतुं ३१ तृणराजस्तालः ३२ उत्सृष्टे
न खरदेहेन हतैस्ताडितैराहताः चकंपिरे अकंपयन् ३४ यस्मिन्निदं विश्वमोतं ऊर्ध्वतंतुषु पटइव ग्रथितं प्रोतं च

पुनरासाद्य संरब्ध उपक्रोष्टा पराक् स्थितः चरणावपरौ राजन्बलाय प्राक्षिपद्रुषा ३१ स
तं गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना चिक्षेप तृणराजाग्रे भ्रामणत्यक्तजीवितं ३२ ते
नाहतो महातालो वेपमानो बृहच्छिराः पार्श्वस्थं कंपयन्भग्नः स चान्यं सोपि चापरं ३३
बलस्य लीलयोत्सृष्टखरदेहहताहताः तालाश्चकंपिरे सर्वे महावातेरिता इव ३४ नै
तच्चित्रं भगवति ह्यनंते जगदीश्वरे ओतप्रोतमिदं यस्मिंस्तंतुष्वंग यथा पटः ३५ ततः कृ
ष्णं च रामं च ज्ञातयो धेनुकस्य ये क्रोष्टारोऽभ्यद्रवन्सर्वे संरब्धा हतबांधवाः ३६ तांस्ता
नापततः कृष्णो रामश्च नृप लीलया गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु ३७ फल
प्रकरसंकीर्णं दैत्यदेहैर्गतासुभिः रराज भूः सतालाग्रैर्घनैरिव नभस्तलं ३८ तयोस्तत्सु
महत्कर्म निशम्य विबुधादयः मुमुचुः पुष्पवर्षाणि चक्रुर्वाद्यानि तुष्टुवुः ३९ अथ ता
लफलान्यादन्मनुष्या गतसाध्वसाः तृणं च पशवश्चेरुर्हतधेनुककानने ४० ॥

तिर्यक्तंतुषु पटवद्वस्त्रे ग्रथितं सर्वतो न सूत्रं वर्तत इत्यर्थः ३५ घनैर्नभ इव भूतलं रराज
तत्र फलप्रकरसंकीर्णमिति दैत्यदेहैः सतालाग्रैः संकीर्णमित्यन्वयः श्वेतनीलघनसादृश्या

श्री° भा° द° पू° १५

तथा भुविकंपादयः दिविउल्कापातादयः आत्मनि वामनेत्रस्फुरणादयः आसन्नंभयशंसि
तुंशीलंयेषांते १२ तानुत्पातानालक्ष्यगोकुलाद्वेदाद्गोगोपानिर्जग्मुरितितृतीयेनान्वयः भ
योद्विग्नाः भयहेतोर्भीताः भयेनैववेपमानाइतिवा १३ नतद्विदंतीत्यतद्विदः १४ पशूनामिव

गावोवृषावत्सतर्यःक्रंदमानाःसुदुःखिताः कृष्णेन्यस्तेक्षणाभीतारुदंत्यइवतस्थिरे ११
अथव्रजेमहोत्पातास्त्रिविधाह्यतिदारुणाः उत्पेतुर्भुविदिव्यात्मन्यासन्नभयशंसिनः १२
तानालक्ष्यभयोद्विग्नागोपानंदपुरोगमाः विनारामेणगाःकृष्णंज्ञात्वाचारयितुंगतं १३
तैर्दुर्निमित्तैर्निधनंमत्वाप्राप्तमतद्विदः तत्प्राणास्तन्मनस्कास्तेदुःखशोकभयातुराः १४
आबालवृद्धवनिताःसर्वेंऽगपशुवृत्तयः निर्जग्मुर्गोकुलाद्दीनाःकृष्णदर्शनलालसाः १५
तांस्तथाकातरान्वीक्ष्यभगवान्माधवोबलः प्रहस्यकिंचिन्नोवाचप्रभावज्ञोऽनुजस्यसः १६
तेऽन्वेषमाणादयितंकृष्णंसूचितयापदैः भगवल्लक्षणैर्जग्मुःपदव्यायमुनातटं १७

वृत्तिर्येषांते अतिवत्सलावापशवःपंचभूतेषुवृत्तिःस्थितिर्येषांतआहुर्हैंग १५ कातरान्भीतान्
बलोबलभद्रः १६ भगवतोलक्षणैर्ध्वजादिभिर्यानितैःपदैःसूचितेनयापदव्यामार्गेण १७ ॥ ॥

15

श्री भा० द० स्क० टी० २६

तत्प्रथ्यमानेन वपुषा व्यथितात्मशरीरः भुजङ्गः कुण्डलीमुत्सृज्य त्यक्त्वा कुपितः स्वफणा
नुन्नमय्य उन्नमय्य केवलमीक्षमाणः तस्थौ कथंभूतः श्वसन् श्वसनरन्ध्रेषु नासिकाविवरेषु विषेण
स्यमानतया अम्बरीषाणि अम्बरीषं पाकभाजनं तद्वत्तप्तानि नेत्राणि यस्य तथा उल्मुकानीव

इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः आज्ञाय मर्त्य
पदवीमनुवर्तमानः स्थित्वा मुहूर्तमुदतिष्ठदुरङ्गबन्धात् २३ तत्प्रथ्यमानवपुषाव्य
थितात्मभोगः त्यक्त्वोन्नमय्य कुपितः स्वफणान्भुजङ्गः तस्थौ श्वसन्श्वसनरन्ध्रवि
षाम्बरीषस्तब्धेक्षणोल्मुकमुखो हरिमीक्षमाणः २४ तं जिह्वया द्विशिखया परिले
लिहानं द्वे सृक्किणी ह्यतिकरालविषाग्निदृष्टिं क्रीडन्नमुं परिससार यथा खगेन्द्रो ब
भ्राम सोऽप्यवसरं प्रसमीक्षमाणः २५ एवं परिभ्रमहतौजसमुन्नतांसमानम्य तत्पृथु
शिरःस्वधिरूढ आद्यः तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादाम्बुजोऽखिलकलादिगुरुर्ननर्त

स्यस्य च २४ हरिस्तु क्रीडन्नमुं सर्पं परिससार परितो बभ्राम अतिकराला विषाग्निदृष्टिर्यस्य
स्य तं जिह्वया द्विशिखया परिलेलिहानमेव २५ परिभ्रमणेनैव हतं तेजो यस्य तम् उन्नतावंसौ
यस्य तं तस्य मूर्धसु ये रत्ननिकराः तेषां स्पर्शेनातिताम्राणि पादाम्बुजानि यस्य ननर्त चेत्
लेषु शिरस्सु कथं ननर्त तत्राह अखिलकलानामादिगुरुः २६ ॥ ॥

16 २६

पदैर्मार्गज्ञानप्रकारमाह तानिति विश्पतेः श्रीकृष्णस्यान्वेषणोपदानानांतरांतरे मध्ये मध्येन
न्दपोहेन यथा गवां क्षतीनां मार्गे सत्वरा योगिनः तत्तत्पादपद्मवादेन यथा परत्वे मृगयंति
तद्वदिति भावः १७ तत्तत्स्वसर्पशरीरवेष्टितं श्रीकृष्णं हृदान्निरीक्ष्य गोपाश्च पशवश्च तत्तथा

तांस्तत्रतत्राब्जयवांकुशाशनिध्वजोपपन्नानिपदानिविश्पतेः मार्गेगवामन्यपदांतरांतरे
निरीक्षमाणाययुरंगसत्वराः १८ अंतर्ह्रदेभुजगभोगपरीतमारात्कृष्णंनिरीहमु
पलभ्यजलाशयांते गोपांश्चमूढधिषणान्परितःपशूंश्चसंक्रंदतःपरमकश्मल
मापुरार्ताः १९ गोप्योनुरक्तमनसोभगवत्यनंतेतत्सौहृदस्मितविलोकगिरःस्म
रंत्यः ग्रस्तेहिनाप्रियतमेभृशदुःखतप्ताःशून्यंप्रियव्यतिहृतंददृशुस्त्रिलोकं २० ताः
कृष्णमातरमपत्यमनुप्रविष्टांतुल्यव्यथाःसमनुगृह्यशुचःस्रवंत्यः तास्ताव्रजप्रि
यकथाःकथयंत्यआसन्कृष्णाननेर्पितदृशोमृतकप्रतीकाः २१ कृष्णप्राणान्निर्वि
शतोनंदादीन्वीक्ष्यतंह्रदं प्रत्यषेधत्सभगवान्रामःकृष्णानुभाववित् २२ इत्थंस्व
गोकुलमनन्यगतिंनिरीक्ष्यसस्त्रीकुमारमतिदुःखितमात्महेतोः आज्ञायमर्त्यपदवी

निरीक्ष्यात्मीयं परं मोहमापुः १९ प्रियेण श्रीकृष्णेन विरहितं त्रैलोक्यं शून्यं ददृशुः २० अनन्यग
तिं श्रीकृष्णशरणं गोकुलं निरीक्ष्य अत एवात्महेतोः स्वगोकुलमतिदुःखितं मात्वा यद्वेगबाधा

श्री॰ भा॰द॰ सु॰टी॰ ३३

गर्भेजगंतियस्यतस्यातिभरेणअवसन्नमाक्रांतंपार्ष्णिपादपृष्ठंग्राघश्रीकृष्णस्यपश्चाद्विसेन
मान्यावमनाद्येयायस्तोताःशरणंप्रपन्नाःसत्याःतंप्रणेमुःसुविग्नमनसोविह्वलचित्ताःपु
वीतितस्मिन्स्थानेजलाद्धस्तात्स्थानीयेवाणमस्यपाप्मनोपिभर्तुर्मोक्षेप्सवःभर्तुर्येनकुशम
लेतस्यवाभूतपतिंप्राणिमात्रस्यपतिंशरणदमाश्रयप्रदं ३२ प्रथमसत्त्वावक्तापितंभग

कृष्णस्यगर्भजगतोतिभरावसन्नंपार्ष्णिप्रहारपरिरुग्णफणातपत्रं दृष्ट्वाहिमाद्य
मुपसेदुरमुष्यपत्न्यआर्ताःश्लथद्वसनभूषणकेशबंधाः ३१ तास्तंसुविग्नमनसो
थपुरस्कृतार्भाःकायंनिधायभुविभूतपतिंप्रणेमुः साध्व्यःकृतांजलिपुटाःशम
लस्यभर्तुर्मोक्षेप्सवःशरणदंशरणंप्रपन्नाः ३२ नागपत्न्यऊचुः न्याय्योहिदंडः
कृतकिल्बिषेस्मिंस्तवावतारःखलनिग्रहाय रिपोःसुतानामपितुल्यदृष्टेःधत्से
दमंफलमेवानुशंसन् ३३ ॥

वोदंडस्तुमोदनेनोपशमयेत्यः न्याय्योहीतितवदंडस्तुमोदनेषड्भिर्दशाभिर्हरेःस्तुतिं
प्रार्थनंपंचभिःश्लोकैःततःपन्नगयोषितां नचनिग्रहानुग्रहलक्षणांवैषम्यमित्याहुः
धत्सेदममिति अनुशासनमालोचयन् ३३ ॥

३३

श्री० भा० द० पू० टी० २८

अहोऽनदेषः अप्रपन्नपदप्राप्यप्रासः अन्यैर्लक्ष्म्यादिभिरपि दुर्लभं कथंभूतं पादरजः परिच्छिन्नः
मेव्यमेवभवतीति प्रार्थ्यं पदमेव समक्षः अन्यत्तत्पदमेव विभवः अपेक्षितः सम्यग्भवति ३८
नमस्तुभ्यं भगवते अचिंत्यैश्वर्यादिगुणाय तदुपादानाय पदणाभिः श्लोकैः विशेषणानि पुरु
षाय पूःषुदेहेषु पूर्णांतर्यामिरूपेणावर्तमानाय महात्मने एवमपरिच्छिन्नाय उक्तः भूतावा
साय आकाशाद्याश्रयाय एतदपि उक्तः भूताय सर्वमपि सत्तेउक्तः पराय कारणाय किंच परा

तदेषनाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः संसारचक्रे भ्रमतः शरीरिणो
यदिच्छतः स्याद्विभवः समक्षः ३८ नमस्तुभ्यं भगवते पुरुषाय महात्मने भूतावासाय
भूताय पराय परमात्मने ३९ ज्ञानविज्ञाननिधये ब्रह्मणेऽनंतशक्तये अगुणायावि
काराय नमस्ते प्राकृताय च ४० ॥ ॥

मात्मने कारणातीताय ३९ कारणत्वे कारणातीतत्वे च समर्थयन्तिमाहुः ज्ञानविज्ञान
निधये ज्ञाने प्राप्तिः विज्ञाने चिच्छक्तिः उभयोर्निधये ताभ्यां पूर्णाय एकत्वेन यात्वमतोऽनंतो ब्रह्म
णोऽनंतशक्तये ब्रह्मणः कथंभूताय अनंतशक्तये प्राकृताय प्रकृतिप्रवर्तकाय अप्राकृतायेति
वा अप्राकृताय अनंतशक्तियुक्ताय अप्रमेयः अगुणत्वादविकारे ब्रह्मणस्सिमाचत्वा कारणाती
ते प्रकृतिप्रवर्तकोऽनंतशक्तिः विज्ञाननिधिश्चा ईश्वरः कारणात्तुभयात्मने नमः इति ४० ॥ २८

निग्रहोप्यनुग्रह एवेत्युक्तं इदानीमनुग्रह एवायं न निग्रहस्तथाप्यनुग्रह इति नोस्माकं यस्माद्
उग्रसर्पत्वं ह एपते अतस्तन्मूलपापनिवर्त्तको दण्डोऽनुग्रह एव क्रोधत्वेन प्रतीयमानोपीत्यर्थः
३४ महोत्साहमनुग्रह इति तपस्सर्वं गुणमभिनन्दति तप इति स्वयमानरहितेन अन्येभ्यो मा
नदेन च सर्वजीवयतीति सर्वजीव ३५ ननु पश्वादिनिमित्त एव भाग्योदयः किं तच्चिन्तनेन तत्राह

अनुग्रहोऽयं भवतः कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः। यद्दन्दशूकत्वममुष्य दे
हिनः क्रोधोऽपि तेऽनुग्रह एव संमतः ३४ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च
मानदेन धर्मोऽथवा सर्वजनानुकम्पया यतो भवांस्तुष्यति सर्वजीवः ३५ कस्यानु
भावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः यद्वाञ्छया श्रीर्ललनाऽऽचरत्तपो वि
हाय कामान् सुचिरं धृतव्रता ३६ न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधि
पत्यं न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः ३७ ॥

पादौ भवन्नित्याहुः श्लोकत्रयेण ३६ कस्यानुभाव इति अत्र आदिना अनल्पादयोपि यस्याः श्रियः प्र
सादमिच्छन्ति सा श्रीर्ललनापि श्रीरेव ललना उत्तमा स्त्री यस्य त्वदङ्घ्रिस्पर्शाधिकारस्यार्थे
धातृप्रमुखादिप्रयतन्ते अस्य सर्वस्य सफलत्वात् किं कृतवानित्यर्थः ३६ यन्न देवपादरजःप्रप

श्री· भा·द· टी· १५

अनाहततत्त्वमेव हेतुत्वेनापि निरूपयन्त्यः स्तुवंति नमः प्रमाणमूलाय मूलकार्यैः तत्त्वाद्
भवः प्रमा प्रमाणयोरव्यवच्छिन्नप्रमाणं च वेदादीनां वक्तृमतिरूपाय शास्त्रप्रवर्तककवये स्तव
तन्निरूपितत्त्वानायत्तः शास्त्रयोनये वेदात्मकनिःश्वासाय किंच प्रवृत्ताय निवृत्ताय निग
मायनमोनमः ४४ अनाहतैश्वर्यत्वाद्देवचतुर्मूर्तिरूपेण सर्वोपास्यत्वेन नमस्यंति नमः
कृष्णायेति श्लोकद्वयेन रामाय संकर्षणाय वसुदेवसुताय वासुदेवाय हितं शुद्धसत्त्वं तत्र
प्रकाशमानाय वासुदेवायेत्यर्थः सात्वतां यादवानां पतये सालोक्यादिना पालकाय

नमः प्रमाणमूलाय कवये शास्त्रयोनये प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ४४
नमः कृष्णाय रामाय वसुदेवसुताय च प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ४५
नमो गुणप्रदीपाय गुणात्मच्छादनाय च गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ४६

वसुदेवसुताय एवं चतुर्मूर्तये श्रीकृष्णाय तुभ्यं नमः इति ४५ कथं चतुर्मूर्तित्वमित्यत आह
नमो गुणप्रदीपायेति गुणाः अन्तःकरणानि तानि प्रदीपयति प्रकाशयति इति तथा संवि
ताधिष्ठातृत्वेन चतुर्मूर्तित्वमित्यर्थः ननु तथाप्येकस्यैव कथं चतुर्मूर्तित्वमत आह गुणात्म
च्छादनाय वृत्तैः स्वगुणैः तदात्मकानां फलवैचित्र्यतया तन्मानमाच्छादयन् नानात्वेन प्रतीताये
त्यर्थः ननु कथं तर्हि प्रतीतिः अत उक्तं गुणवृत्त्युपलक्ष्यायेति चित्तादीनां चेतनाद्यैवं

यादिवृत्तीनामुपलक्ष्याय गुणद्रष्ट्रे गुणसाक्षिणे एवं विद्वदुपलक्ष्य
प्रवर्तते यतस्तत्राह स्वसंविदे स्वगोचरायेत्यर्थः ४६॥ १५

अनेन तच्छक्तित्वात्कालशक्त्या विश्वस्रष्टृत्वादिरूपेण नमस्यतीति कालाय कालस्वरूपाय कालनाभाय कालशक्त्याश्रयाय कालावयवानां क्षणादिसमयानां साक्षिणे तत्तद्विश्वाय तर्हि किं जडोऽहं नेत्याह तदुपद्रष्ट्रे द्रष्टृमात्राय किं तत्कर्त्रे न च कर्तृमात्राय विश्वहेतवे सर्वकारणरूपाय ४१ तदेवाह भूतेति प्राणपर्यन्तं भूतादिरूपाय अतः सर्वकारणरूपायेति अहंकारात्मतया नमस्यति त्रिगुणेनेति एवं सति कार्यः त्रिगुणोऽभिमानः तेन गूढः स्वात्मा

कालाय कालनाभाय कालावयवसाक्षिणे। विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे
४१ भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने। त्रिगुणेनाभिमानेन गूढस्वात्मानुभू
तये ४२ नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते। नानावादानुरोधाय वाच्य
वाचकशक्तये ४३ ॥

भूतानामात्मनामनुभूतिर्यस्य तस्मै ४२ स्वस्याहंकारानात्मत्वमित्याह नमोऽनन्ताय अहंकारपरिच्छेदात् अतः सूक्ष्माय अहंरूपत्वात् अत एव कूटस्थाय उपाधिकृतविकाराभावात् अत एव विपश्चिते सर्वज्ञाय एवं च सतः स्तुत्वा अचिन्त्यमायात्वेन स्तुवन्ति नानावादानुरोधाय अस्ति नास्ति सर्वज्ञः किंचिज्ज्ञः बद्धः मुक्तः एकोऽनेकः इत्यादीन् नानावादाननुरुणद्धि स्वाययानुवर्तते यस्तस्मै किं च वाच्यवाचकशक्तये अभिधानाभिधेयशक्तिभेदाद।

एवं तावद्दुरागमोहनेन नमस्कारैश्च भगवन्तं प्रसाद्येदानीं तदधीनानां प्राणिनां कोपापराधं त्वया
पालयितव्यः प्रार्थयन्ते त्वं हीति अस्य लोकस्य जन्मादीन् त्वमेवाहतस्तु करोषि ततः च नास्ता
नमस्काररूपेण सतः स्वभावान्धोरत्वादीन् प्रतिबोधयन्नीहसे क्रीडसि यद्वा अस्य जन्मादीं
त्वमेवेहसे तस्य त्वयः कथं भूतः अकृतस्यानादिर्याकालशक्तिस्तां धारयतीति तथा अ

ह्यस्य जन्मस्थितिसंयमान्विभो गुणैरनीहोऽकृतकालशक्तिधृक् तत्तत्स्वभा
वान्प्रतिबोधयन्सतः समीक्षयामोघविहार ईहसे ४९ तस्यैव तेऽमूस्तनवस्त्रि
लोक्यां शान्ता अशान्ता उत मूढयोनयः शान्ताः प्रियास्ते ह्यधुनावितुं सतां स्था
तुश्च ते धर्मपरीप्सयेहतः ५० अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः क्षन्तुमर्ह
सि शान्तात्मन्मूढस्य त्वामजानतः ५१ अनुगृह्णीष्व भगवन्प्राणांस्त्यजति पन्नगः
स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयतां ५२ ॥

न्यस्माने ४९ अत्र तस्य तवैव अमूस्तनवः तन्वन्तस्तिस्रोऽपि प्रकाराः तथापि तवाधुनापा
ताः प्रियाः कुतः सतां परिपालनेच्छया ईहतः प्रवर्तमानस्य अतः शान्तानवितुं स्थातुः स्थितस्य ५०
एवं च तव प्रियाचरणाय परापराधः तर्हि सोढव्य इति ५१ युष्मदनुग्रहे अन्येषामनुग्रह इति चेत्तत्रा

अगोचरत्वादुपलक्षणैर्दर्शयन्नेव नमस्यति अव्याकृतविकाराय व्यवा अतर्क्यमहिम्न इत्यर्थः सर्वव्याकृतसिद्धये सर्वकार्योत्पत्तिप्रकाशहेतुत्वेनोपलक्षणीयायेत्यर्थः उपलक्षणान्तरमाह हृषीकेशाकरणप्रवर्तक किं विषयलिप्सया न मुनये आत्मारामाय किं साधनेन हि। मौनशीलिने मौनमात्मारामतातत्स्वभावाय ४७ ऊतः परावरगतिज्ञाय स्थूलसूक्ष्माणां गतिज्ञत्वेन नष्टाविभजमानायेत्यर्थः किं च तद्द्रष्टे सर्वाध्यक्षाय सर्वस्याधिष्ठात्रे कुत एतत् अवि-

अव्याकृतविहाराय सर्वव्याकृतसिद्धये हृषीकेश नमस्तेऽस्तु मुनये मौनशीलिने
४७ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः अविश्वाय च विश्वाय तद्द्रष्टेऽस्य च हेतवे ४८

श्वाय न विश्वं यस्मिंस्त्रिविधायप्येवं विश्वाय च तद्विवर्ताधिष्ठानायेत्यर्थः किं च तद्द्रष्टे अध्या-सापवादसाक्षिणे अविद्यास्य विश्वाध्यासस्य तदपवादस्य च विद्याविद्याभ्यां हेतवे एवमद्वै-तविद्यारूपाय अमद्वैतविद्यारूपाय यद्वा अविश्वाय विश्वतैजसप्राज्ञावस्थारहिताय विश्वाय च मायया तद्रूपिणे तद्द्रष्टे तासामवस्थानां भावाभावसाक्षिणे अन्यत्त-मानं तस्मात्सर्वगतित्वसर्वाधिष्ठातृत्वात्माभिमानतादिभिर्निवृत्तिपर्यन्तैर्ये यथायथं भजन्ते नमस्य-ति विशेषणैरसंकीर्णः पञ्चपञ्चाशन्नामभिः स्तुतः अहिंसाभिः प्रसन्नो नस्तासामिव भवेद्धरिः ४ ७ ॥

नतु कस्त्रोभयमास्थायात्तत्तस्यागुष्माभिर्भयेनोऽन्यात्‌ इत्यीयमित्यात्ताश्तोयितपानिर्गतस्य

यएतत्संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनं कीर्तयन्नुभयोः संध्योर्नयुष्मद्भयमाप्नुया
त् ५९ योऽस्मिन्स्नात्वा महाक्रीडे देवादींस्तर्पयेज्जलैः उपोष्य मां स्मरन्नर्चेत्सर्वपापैः
प्रमुच्यते ६० द्वीपं रमणकं हित्वा ह्रदमेतमुपाश्रितः यद्भयात्स सुपर्णस्त्वां नाद्या
न्मत्पादलाञ्छितम् ६१ ऋषिरुवाच मुक्तो भगवता राजन्कृष्णेनाद्भुतकर्मणा तं पूजया
मास मुदा नागपत्न्यश्च सादरं ६२ दिव्याम्बरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः दिव्य
गन्धानुलेपैश्च महत्योत्पलमालया ६३ पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजं ततः
प्रीतोऽभ्यनुज्ञातः परिक्रम्याभिवाद्य तं ६४ सकलत्रसुहृत्पुत्रो द्वीपमब्धेर्जगाम ह
तदैव सामृतजला निर्विषा यमुनाभवत् ६५ अनुग्रहाद्भगवतः क्रीडामानुषरू
पिणः गते सर्पे परिष्वज्य मृतं पुनरिवागतं ६६ गोपा मूर्ध्न्यभिघ्रायैनं सिषिचु
र्नेत्रजैर्जलैः कृष्णमक्लिष्टकर्माणमन्ये विस्मितचेतसः नन्दसूनुं ददृशुर्गोपा र
ह्याणि वजलोऽनन्दी ६७ गीयमानेन गोपीभिस्तुरितचारुविक्रमः संस्तूयमानो

मित्यार्ह ५९ नयात्रस्थितेतत्रसंभवतीतिभावः नवत्तवगातृडाद्भयेभवेदित्याहद्वीप



81

त्वद्दात्तया प्राणिनो नाथामिति भावः ५३ गुणाविविधत्वायासृजतेऽतिविसर्जने तत्रापि
नानास्वभावाद्योयस्ततत् ५६ जात्याजन्मनैव उरुमन्युर्येषां ते स्वयं कथं त्यजामः ५७

विधेहि ते किंकरीणामनुष्ठेयं तवाज्ञया यच्छ्रद्धयानुतिष्ठन्वै मुच्यते सर्वतो भया
त् ५३ श्रीशुक उवाच इत्थं स नागपत्नीभिर्भगवान्समभिष्टुतः मूर्छितं भग्न
शिरसं विससर्जांघ्रिकुट्टनैः ५४ प्रतिलब्धेंद्रियप्राणः कालियः शनकैर्हरिं कृ
च्छ्रात्समुच्छ्वसन्दीनः सर्पः प्राह कृतांजलिः ५५ कालिय उवाच वयं खलाः स
होत्पत्त्या तामसा दीर्घमन्यवः स्वभावो दुस्त्यजो नाथ लोकानां यदसंग्रहः ५६
त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनं नानास्वभाववीर्यौजोयोनिबीजाशयाकृति
५७ वयं च तत्र भगवन्सर्पा जात्युरुमन्यवः कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहि
ताः स्वयं ५८ भवान्हि कारणं तत्र सर्वज्ञो जगदीश्वरः अनुग्रहं निग्रहं वा मन्यसे तद्वि
धेहि नः शुक उवाच इत्याकर्ण्य वचः प्राह भगवान्कार्यमानुषः नात्र स्थेयं त्वया
सर्प समुद्रं याहि मा चिरं स्वज्ञात्यपत्यदाराढ्यो गोनृभिर्भुज्यतां नदी यतिभिर्मे नि
निर्वस्तो याहि समाजया ५९ ॥

हि यस्मात् तत्र त्वन्मायात्यागे भवानेव कारणमित्यनुग्रहं विधेहि वा समाजया वा

दंतीति ईश्वरत्वान्निग्रहं वा विधेहि ५८ यतो गोभिर्नृभिश्च नदी भुज्य
तामिति ५९ ॥

श्री॰
भा॰ द॰
सु॰ टी॰
८२

विषमेवायुधं यस्य सः प्रत्यभ्यायात् योद्धुं प्रतिजगाम उत्थितानेकमस्तकः उन्नमितानेकफणः द,
दायुधः करालजिह्वश्चासौ उच्छ्वसितोग्रलोचनः उच्छ्वसितान्युज्जृम्भितानि उग्राणि लोचनानि यस्य सः

ततच्छ्रुत्वा कुपितो राजन्भगवान्भगवत्प्रियः विजिघांसुर्महावेगः कालियं समुपाद्रव
त् ५ तमापतन्तं तरसा विषायुधः प्रत्यभ्ययादुत्थितनैकमस्तकः दद्भिः सुपर्णं व्यद
शद्दायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ६ तं तार्क्ष्यपुत्रः स निरस्य मन्युमान्प्रचण्डवे
गो मधुसूदनासनः पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमुग्रविक्रमः ७ सु
पर्णपक्षाभिहतः कालियोतीवविह्वलः ह्रदं विवेश कालिन्द्यास्तदगम्यं दुरासदं ८ त
त्रैकदा जलचरं गरुडो भक्ष्यमीप्सितं निवारितः सौभरिणा प्रसह्य क्षुधितोहरत् ९ मी
नान्सुदुःखितान्दृष्ट्वा दीनान्मीनपतौ हते कृपया सौभरिः प्राह तत्रत्यक्षेममाचरन् १०
अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति सद्यः प्राणैर्वियुज्येत सत्यमेतद्ब्रवीम्यहं ११
तं कालियः परं वेद नान्यः कश्चन लेलिहः अवात्सीद्गरुडाद्भीतः कृष्णेन च विवासितः १२

६ तार्क्ष्यपुत्रो गरुडः मधुसूदनस्यासनं यस्मिन्सः ७ तस्य गरुडस्यागम्यमप्राप्यं दुरासदं ८
तदगम्यत्वे कारणमाह तत्रेति निवारितोपि ९ लेलिहः सर्पस्तत्रावात्सीत् १२ ॥



82

ततः रमणकद्वीपो नागालयस्तेन निरयापयत् वेधनस्वऽशवितः श्रोतान्ह मोत्तत्रद्वामिना असमंजस
मप्रियं १ उपाहार्यैः सुपर्णाभ्यैः सर्पजनैः सर्पप्रवरैर्नागैः तैः नागानां संबन्धी यस्मिन्नेकैको
नागोदीयतेतत्याभूतो यो बलिः सुपर्णाय निरूपितः वानस्पत्यः वनस्पतेर्मूले देयः नागाल
यवधपरिहाराय यो बलिः निरूपितः उपकल्पितः २ ते च नागाः स्वं स्वं भागं सुपर्णाय प्रयच्छन्ति

राजोवाच नागालयं रमणकं कस्मात्तत्याज कालियः किं वा कृतं सुपर्णस्य तेनैकेना
समञ्जसं १ श्रीशुक उवाच उपहार्यैः सर्पजनैर्मासि मासीह यो बलिः वानस्पत्यो
महाबाहो नागानां प्राङ्निरूपितः २ स्वं स्वं भागं प्रयच्छन्ति नागाः पर्वणि पर्वणि गोपी
थायात्मनः सर्वे सुपर्णाय महात्मने ३ विषवीर्यमदाविष्टः काद्रवेयस्तु कालि
यः कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिं ४ ॥

ततो भीता नागो पीथाय रक्षणाय ३ विषवीर्येण भावो यो मदः तेनाविष्टः काद्रवेयः कद्रुपुत्रः ग
गरुडं कदर्थीकृत्य तिरस्कारं प्राप्य उपहार्यैः सुपर्णाभ्यैः सर्पप्रवेजनाः तैर्नागानां संबन्धी
नेकैको नागोदीयते तत्याभूतो यो बलिः सुपर्णाय निरूपितः तत्र स्वं स्वं भागं सर्वे नागाः प्र
यच्छन्ति कालियस्तु न प्रयच्छति किंतु अन्यैर्दत्तमपि बलिं स्वयमेव बुभुजे ४ ॥

कालाग्नेर्मृत्युरूपाद्रौद्रः नमृत्योर्बिभीमः किंतुत्वच्चरणवियोगादित्याहुः नशक्नुमइति विमोह
नोह्रिद्वेनततः स्वयोगेतान् गोपान्पादनतोमावुक्तेनाह्नवह्नितः १४ १५ इति श्री भावा
र्थदीपिकायांदशमस्कंधेसप्तदशोध्यायः १७ अष्टादशेततोग्रीष्मेवसन्तगुणलक्षिते अत्रान

तदाशुविवनोद्भूतो दावाग्निः सर्वतोव्रजं स्वमेनिर्णीय आहृत्य प्रदग्धुं सप्रपंक्रमे ११
ततऽस्यायमेश्रोताद्दह्यमानाव्रजौकसः कृष्णं ययुः शरणं मायामनुजमीश्वरं १२
कृष्णकृष्णमहाभागहेरामामितविक्रम एषघोरतमोवह्निस्तावकान्ग्रसतेहिनः १३
सुदुस्तरान्नःस्वान्पाहिकालाग्नेःसुहृदःप्रभो नशक्नुमःत्वच्चरणंसंत्यक्तुमकुतोभयं
१४ इत्थंस्वजनवैक्लव्यंनिरीक्ष्यजगदीश्वरः तमग्निमपिबत्तीव्रमनन्तोनन्तशक्तिधृक्
१५ इतिश्रीभागवतेदशमस्कंधेकालियदमनेनामसप्तदशः १७ शुकउवाच अथा
कृष्णपरिवृतोज्ञातिभिर्मुदितात्मभिः अनुगीयमानोन्यविशद्व्रजंगोकुलमण्डितं १ व्र
जेविक्रीडतोरेवंगोपालच्छद्ममायया ग्रीष्मोनामर्तुरभवन्नातिप्रेयाञ्छरीरिणां २

यहुलेनालेप्रलेवंलीलयाहृपिः कृष्णान्वन्नेफणाग्रेषुकालियस्यमकौतुके बलेअलेबहो
गोसमायेहयदयातिहा गोपालच्छद्ममाययागोपालनमेवच्छद्मयस्यांतया २ ॥ ॥



83

श्री॰
भा॰द॰
सु॰टी॰
८४

नदन्नेनदन्तः चित्रा मृगा द्विजाश्च यस्मिन् गायन्तो मयूरा भ्रमराश्च यस्मिन् कूजन्तः कोकिला: सारसाश्च यस्मिंस्तत् अविशत् ७ काकपक्षाः हृतकरणान्मार्जनकेशाः भ्रमरादिप्रका

वने कुसुमिते श्रीमन्नदच्चित्रमृगद्विजे गायन्मयूरभ्रमरे कूजत्कोकिलसारसे ७ क्रीडिष्यमाणस्तत्कृष्णो भगवान्बलसंयुतः वेणुं विरणयन्गोपैर्गोधनैः संवृतोऽविशत्
८ प्रवालबर्हस्तवकस्रग्धातुकृतभूषणाः रामकृष्णादयो गोपा ननृतुर्युयुधुर्जगुः
९ कृष्णस्य नृत्यतः केचिज्जगुः केचिदवादयन् वेणुपाणितलैः शृङ्गैः प्रशशंसुरथापरे
१० गोपजातिप्रतिच्छन्ना देवा गोपालरूपिणः ईडिरे कृष्णरामौ च नटा इव नटं नृप ११
भ्रामणैर्लङ्घनैः क्षेपैरास्फोटनविकर्षणैः चिक्रीडतुर्नियुद्धेन काकपक्षधरौ क्वचित् १२
क्वचिन्नृत्यत्सु चान्येषु गायकौ वादकौ क्वचित् शशंसतुर्महाराज साधु साध्विति वादिनौ १३ क्वचिद्बिल्वैः क्वचित्कुम्भैः क्वचामलकमुष्टिभिः अस्पृश्यनेत्रबन्धाद्यैः क्वचिन्मृगखगेहया १४ क्वचिद्दर्दुरप्लावैर्विविधैरुपहासकैः कदाचित्स्पन्दोलिकया कर्हिचिन्नृपलीलया १५ ॥ रामः

रैः नियुद्धेन बाहुयुद्धेन वा विक्रीडतः १२ बिल्वैर्बिल्वफलैः अस्पृश्यपदेन नेत्रबन्धनाद्यैर्मृगाणां खगानां चेष्टया १४ ```` १५ दर्दुरप्लावैः मण्डूकप्लुतिभिः स्पन्दोलिकया दोलालेख

८४

84

कलहच्छिद्वेचनाय प्रवरोहणे अस्मिन्निति प्रवरोहणमर्यादा ततः परे दूरमगात् २५ धर
णीधरेन्द्रः शेषस्तस्य गौरवं यस्य तं निजं मायारहितं वपुरास्थितः पुरटपरिच्छदाः सुवर्णालंकाराः तडिद्युमान्वि
द्युद्वान् इत्यलंकारोपमा उडुपतिवाडिति रामोपमा उडुपतिं नारायणोपत्तिं वहतीति उडुप
तिवाट् यदि यस्या वित्तस्थाने स्थितत्वा विद्युत्त्वी भवेत्ति उपरितो उडुपतिः तदा मेघदाय यथाम

अविषह्यं मन्यमानो रामे दानवपुङ्गवः वहन्द्रुततरं प्रागादवरोहणतः परं २५ तमु
द्वहन्धरणिधरेन्द्रगौरवं महासुरो विगतरयो निजं वपुः समास्थितः पुरटपरिच्छदो बभौ
तडिद्युमानुडुपतिवाडिवाम्बुदः २६ निरीक्ष्य तद्वपुरलमम्बरे चरत्प्रदीप्तदृग्भ्रुकुटितटो
ग्रदंष्ट्रकं ज्वलच्छिखं कटककिरीटकुण्डलत्विषाद्भुतं हलधर ईषदत्रसत् २७ अथा
गतस्मृतिरभयो रिपुं बलो विहाय सार्थमिव हरन्तमात्मनः रुषाहनच्छिरसि दृढेन
मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा २८ रामः ॥

वति तथा विद्यया विद्युद्वान् २६ अलमतिवेगेन प्रदीप्ते दृशौ यस्मिंस्तत् भ्रुकुटितटे उग्रा दंष्ट्रा
यस्मिंस्तत् ज्वलन्त्यः शिखाः केशा यस्मिंस्तत् २७ अपगता स्मृतिर्ज्ञानं यस्य सः अत एवाभयं
आत्मनः सार्थं गोपसमूहं विहाय हरन्तं रिपुं हन्तुं जघान २८ विहायसा आकाशमार्गेणात्मा
त्मनः आत्मसमर्थमिव हरन्तमिति वज्ररंहसा वज्रवेगेन मुष्टिना तस्य प्रलम्बस्य मस्तके मुष्टिह





८०

नद्यः अद्रिद्रोणयः पर्वतदर्यः कुञ्जानि च लतादिपिहितस्थानानि कुञ्जेषु काननेषु सरःसु च १६
यथायथं द्वयोर्द्वयोर्बाल्याद्य पशूंश्चारयतोः तद्वने तस्मिन्वने तयोर्जिहीर्षया हर्तुमिच्छया १७

एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने नद्यद्रिद्रोणिकुञ्जेषु काननेषु सरःसु
च १६ पशूंश्चारयतोर्गोपैस्तद्वने रामकृष्णयोः गोपरूपी प्रलम्बोऽगादसुरस्तज्जि
हीर्षया १७ तं विद्वानपि दाशार्हो भगवान्सर्वदर्शनः अन्वमोदत तत्सख्यं वधं
तस्य विचिन्तयन् १८ तत्रोपाहूय गोपालान्कृष्णः प्राह विहारवित् हे गोपा
विहरिष्यामो द्वन्द्वीभूय यथायथम् १९ तत्र चक्रुः परिवृढौ गोपा रामजनार्दनौ
कृष्णसंघट्टिनः केचिदासन्रामस्य चापरे २० आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्ष
णाः यत्रारोहन्ति जेतारो वहन्ति च पराजिताः २१ वहन्तो वाह्यमानाश्च चारयन्तश्च गोध
नं भाण्डीरकं नाम वटं जग्मुः कृष्णपुरोगमाः २२ रामसंघट्टिनो यर्हि श्रीदामवृषभा
दयः क्रीडायां जयिनस्तांस्तानूहुः कृष्णादयो नृप २३ उवाह कृष्णो भगवान्
श्रीदामानं पराजितः वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् २४

द्वन्द्वीभूय १९ परिवृढौ नायकौ तत्र केचन श्रीकृष्णसंघट्टिनः कृष्णपक्षीयाः २० वा

[illegible]

श्री
भा० द०
स्कं० टी०
८९

ततो गवां खुरैश्छिन्नैर्गोष्पदैरंकितैश्च भूप्रदेशैः तृणैः श्री मार्गमन्वगमन् नष्टाजीव्या गतजी
विकासाधनाः अतएव विचेतसः ४ मुञ्जाटव्यामिति सैव गोधनानां नाशहेतुः ५ गोपानां

तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरंकितैर्गवां मार्गमन्वगमन्सर्वे नष्टाजीव्या विचेतसः ४
मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोकुलं संप्राप्य तृषिताः श्रान्तास्ततस्ते संन्यवर्तय
न् ५ ता आहूता भगवता मेघगंभीरया गिरा स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षि
ताः ६ ततः समंताद्वनधूमकेतुर्यदृच्छयाभूत्क्षयकृद्वनौकसां समीरितः सारथि
नोल्बणोल्मुकैर्विलेलिहानः स्थिरजंगमान्महान् ७ तमापतन्तं परितो दवाग्निं गोपा
श्च गावः प्रसमीक्ष्य भीताः ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः
८ कृष्ण कृष्ण महावीर हे रामामितविक्रम दावाग्निना दह्यमानान्प्रपन्नांस्त्रातु
मर्हथः ९ नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुं वयं हि सर्वधर्मज्ञ त्वन्नाथाः
त्वत्परायणाः १० शुक उवाच वचो निशम्य कृपणं बंधूनां भगवान्हरिः निमीलय
त मा भैष्ट लोचनानीत्यभाषत ११ तथेति मीलिताक्षेषु भगवानग्निमुल्बणं पी
त्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत् १२॥

मार्गादिजनितात् तत्क्षणमेव भीतीर्दीनीन्तान्मोचयदित्यर्थः ८ ९ १० ११ १२॥

नाशहेतुर्वनवह्निः सर्वतः प्रादुरभूत् सारथिना वायुना ७ कक्षाङ्कुरप्रदेशान् तृणा

अपस्मृतो गतस्मृतिः महारवो समीरयन् व्यसुर्गतप्राणः मघवत आयुधेन वज्रेणाहतः ।
२९ तदर्हणं प्रशंसार्हं ३२ इति श्रीभावार्थदीपिकायां दशमस्कन्धेऽष्टादशोऽध्यायः १८ ऊनविंशो

मुष्ट्याहतः सपदि विशीर्णमस्तको मुखाद्वमन्रुधिरमपस्मृतोऽसुरः । महारवं व्यसुरपतत्समीरयन्गिरिर्यथा मघवत आयुधाहतः ॥ दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना । गोपाः सुविस्मिता आसन्साधु साध्विति वादिनः ॥ आशिषोऽभिगृणन्तस्तं प्रशशंसुस्तदर्हणम् । प्रेत्यागतमिवालिंग्य प्रेमविह्वलचेतसः ॥ पापे प्रलम्बे निहते देवाः परमनिर्वृताः । अभ्यवर्षन्बलं माल्यैः शशंसुः साधु साध्विति ३२ इति श्रीभागवते दशमस्कन्धेऽष्टादशोऽध्यायः १८ श्रीशुक उवाच क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः । स्वैरं चरन्त्यो विविशुस्तृणलोभेन गह्वरम् १ अजा गावो महिष्यश्च निर्विशन्त्यो वनाद्वनम् । ईषीकाटवीं निर्विविशुः क्रन्दन्त्यो दावतर्षिताः २ तेऽपश्यन्तः पशून्गोपाः कृष्णरामादयस्तदा । जातानुतापा न विदुर्विचिन्वन्तो गवां गतिम् ३ ॥

निविष्टेषु गोपगोकुलमच्युतः मेजाः गावो महिष्यश्च गोपानन्तः दूरचारिणीः दूरचा रिण्यो वनाद्वनं निर्विशन्त्यः १ दावेन तर्षिताः तृषिताः क्रन्दन्त्यः ईषीकाटवीं मुञ्जाटवीं

तत्र प्रावृड्वर्णनेन ततः प्रावर्ततेत्यादिना विंशत्या सर्वेषां प्राणिनां समुद्भवः ३ उत्पत्तिर्जीवनं च
यस्याः सा प्रावृट् विद्योतमानाः परिधयः परिवेषाः परिवेषस्तु परिधिरिति विश्वः छिन्नमिताहृणो
या सा विस्फूर्जितं येन बभितं नभस्तलं यस्मात् सा ३ निविडैः आच्छन्नं सगुणमाच्छन्नं जीवात्मा विद्यु
न्नूर्जितं नामसुदाससत्वरजस्तमोभिः उपमा ४ पर्जन्यो मेघः सूर्यो वा पर्जन्यः सूर्यः गोभिः किरणैः का

ततः प्रावर्तत प्रावृट् सर्वसत्वसमुद्भवा विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ३ सा
न्द्रनीलाम्बुदैर्व्योम सविद्युत्स्तनयित्नुभिः अस्पष्टज्योतिराच्छन्नं ब्रह्मेव सगुणं बभौ ४
अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते ५ त
डित्वन्तो महामेघाश्चण्डश्वसनवेपिताः प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव ६ तपः
कृशा देवमीढा आसीद्वर्षीयसी मही यथैव काम्यतपसस्तनुः संप्राप्य तत्फले ७ नि
शामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः यथा पापेन पाषण्डा न हि वेदाः कलौ युगे ८

ले यथा वित्तं समये अग्रराजोपमाकरादानं तासां समये पुनर्दानं तावदसुचिता ५ अस्य विश्वस्य प्रा
णिनां आप्यायनकरं जीवनमुदकं मुमुचुः कृपालवो यथा जनेतमसे निरीक्ष्य वायुभिर्वेपिताः अत्र
कंपितमानाः तदाप्यायनाय स्वजीवितमपि त्यजंति तद्वन्महान्तो मेघाः तडिद्भिः सविद्युत्वेनि
रीक्ष्य प्रेरिताः जीवनं मुमुचुरिति ६ तपसा ग्रीष्मेण कृशा देवमीढा पर्जन्यसिक्ता मिहसेचने।

श्री भा द टी ८८

अधोक्षजप्रवचेतसो येषां ते १५ असंस्कृता अप्रसृताः नाभ्यस्यमाना इत्यसंस्कृतसाम्यं कालेन चाह
ताइति तृणाच्छादनस्य साम्यं १६ यथा कामिन्यः पुरुषेषु चलाः १७ निर्गुणस्याप्यरहितस्यापि गुणिनि निग
र्जितया हृवत्ति अभात् अथो भगवत्गुणव्यतिकरात्मके व्यक्ते प्रपञ्चे अगुणवान्निर्गुणः पुरुषो य

गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः अभिभूयमाना व्यसनैर्यथाधोक्षजचेतसः
१५ मार्गा बभूवुः संदिग्धास्तृणैश्छन्ना ह्यसंस्कृताः नाभ्यस्यमानाः श्रुतयो द्विजैः का
लहता इव १६ लोकबन्धुषु मेघेषु विद्युतश्चलसौहृदाः स्थैर्यं न चक्रुः कामिन्यः पुरुषे
षु गुणिष्विव १७ धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात् व्यक्ते गुणव्यतिकरेऽगुण
वान्पुरुषो यथा १८ न रराजोडुपश्छन्नः स्वज्योत्स्नाराजितैर्घनैः अहंमत्या भासितया
स्वभासा पुरुषो यथा १९ मेघागमोत्सवा हृष्टाः प्रत्यनन्दञ्छिखण्डिनः गृहेषु तप्ता
निर्विण्णा यथाच्युतजनागमे २० पीत्वापः पादपाः पद्भिरासन्नानात्ममूर्तयः प्राक्क्षामा

घोति १९ स्वभासा भासितया अहंत्येति स्वचैतन्येनैव प्रकाशितेनाहंकारेणाच्छन्नो जीवो यथा
यद्वा अहं विद्वान् शान्तोऽहमित्यहंमत्या स्वप्रतीत्यैवाध्यारोपितयेति २० मेघागमेनोत्सवो येषाम
तो हृष्टाः नानात्ममूर्तयः अनेकरूपदेहाः २२ ॥

नित्यकर्मावसाने आचार्याणां निनदं श्रुत्वा तच्छिष्याय यथाऽधीयंते तद्वदिति अनुशुष्य
अनुशुष्यंत्यः अस्वतंत्रस्य इंद्रियपरतंत्रस्य स्वतंत्रस्य निरंकुशस्येति वा १० हरिभिर्नीलैः शा
ष्पैः बालतृणैः नीलवर्णा क्वचित् क्वचिदिंद्रगोपैः कीटविशेषैः लोहिता तत्र तत्र उच्छिलींध्रैः
छत्राकैः कृतच्छाया नृणां राज्ञां श्रीः सेनासंपदिव ११ क्षेत्राणीति तदा हि दरिद्रा वि

श्रुत्वापर्जन्यनिनदं मंडूका व्यसृजन्गिरः तूष्णींशयानाः प्राग्यद्वद्ब्राह्मणा नियमात्य
ये ९ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः पुंसो यथाऽस्वतंत्रस्य देहद्रवि
णसंपदः १० हरिता हरिभिः शष्पैरिंद्रगोपैश्च लोहिताः उच्छिलींध्रकृतच्छाया नृणां
श्रीरिव भूरभूत् ११ क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः धनिनामुपतापं च
दैवाधीनमजानतां १२ जलस्थौकसः सर्वे नववारिनिषेवया अबिभ्रन्रुचि
रं रूपं यथा हरिनिषेवया १३ सरिद्भिः संगतः सिंधुश्चुक्षोभ श्वसनोर्मिमान् अपक्व

क्षेत्रेलसंतः श्रियं स्वादयो मुदं ददुः विक्लेदे शुष्यंतो नानुतापं चेति १२ अबिभ्रन् अबिभरुः या
था हरिनिषेवयेति हरिसेवायां सत्यां हि मघपव सर्वे रुचिरा भवंति तस्याः परमधर्मत्वा
त्परमसत्वाद्वेति तद्वदिति १३ कामाक्तं कामवासनायुक्तमिति चित्तं श्वसनोर्मिमा

औत्सुक्ययुक्ता धीर्येषां ते अपि किं स्वगतिं स्वस्थानं नोऽस्मानुपाधास्यत् उपाधास्यति नोऽस्मानुबु
द्धिमाद्ययच्छतीति संकल्पितवंत इत्यर्थः ११ इति एवंभूतं स्वानां ह्रदि संकल्पं मनोरथं अखिलदृक् सर्वज्ञः
स्वयमेव विज्ञाय तेषां संकल्पसिद्धये कृपया एतद्वक्ष्यमाणमचिंतयत् १२ अविद्या देहाद्यहंबुद्धिः तत्तत्
कर्म ततः उच्चावचासु देवतिर्यगादिषु भ्रमन् स्वां गतिं न वेद १३ स्वं ब्रह्मस्वरूपं लोकं वैकुंठाख्यं तमसः

ते चौत्सुक्यधियो राजन्मत्वा गोपास्तमीश्वरं अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः ११ इ
ति स्वानां स भगवान्विज्ञायाखिलदृक्स्वयं संकल्पसिद्धये तेषां कृपयैतदचिंतयत् १२ जनो वै लो
क एतस्मिन्नविद्याकामकर्मभिः उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन् १३ इति संचिंत्य भ
गवान्महाकारुणिको विभुः दर्शयामास लोकं स्वं गोपानां तमसः परम् १४ सत्यं ज्ञानमनंतं य
द्ब्रह्मज्योतिः सनातनं यद्धि पश्यंति मुनयो गुणापाये समाहिताः १५ श्रीयम ॥

सः परं प्रकृतेः परं देहादिभिः पिहितानां दर्शनमशक्यमिति प्रथमं देहादिव्यतिरिक्तं ब्रह्मस्वरूपं दर्शयामा
स स्वमिति १४ सत्यमबाध्यं ज्ञानमजडमनंतमपरिच्छिन्नं ज्योतिः स्वप्रकाशं सनातनं परमार्थसिद्धं
गुणापायः त्रिगुणापोहे ज्ञानिनो यत्पश्यंति तद्रूपेणैव दर्शयामास १५ ॥



114

श्री॰
भा॰ द॰
सु॰ टी॰
११५

ऊनत्रिंशेतुरासार्थंमुक्तिश्रमक्लयोहरेः गोपीभीरासमंडलेमोनस्यांतर्धिकौतुके ब्रह्मादिजयसंरूढद
र्पकंदर्पदर्पहा जयतिश्रीपतिर्गोपीरासमंडलमंडनः ननुविपरीतमिदंपरदारविनोदनेकंदर्पविजय
त्वाप्रतीतेःमैवंयोगमायामुपाश्रितःआत्मारामोप्यरीरमत्साक्षान्मन्मथमन्मथः आत्मन्यवरुद्ध
सौरतइत्यादिषुस्वातंत्र्याभिधानात्तस्माद्रासक्रीडाविडंबनंकामजयख्यापनायेत्येवतत्त्वं किंचशृंगा
रकथापदेशेननिवृत्तिपरेयंपंचाध्यायीतिव्यक्तीकरिष्यामः ताराञीरितियाताबलाश्र

शुकउवाच भगवानपिताराञीःशरदोत्फुल्लमल्लिकाः वीक्ष्यरंतुंमनश्चक्रेयोगमायामुपाश्रितः१
तदोडुराजःककुभःकरैर्मुखंप्राच्याविलिंपन्नरुणेनशंतमैः सचर्षणीनामुदगाच्छुचोमृजन्प्रियः
प्रियायाइवदीर्घदर्शनः २ दृष्ट्वाकुमुद्वंतमखंडमंडलंरमाननाभंनवकुंकुमारुणं वनंचतत्को
मलगोभिरंजितंजगौकलंवामदृशांमनोहरं ३ ॥

जेसिद्धामयेमारंस्यथक्षपाइतियाःप्रतिज्ञातास्ताःशरद्यःतदातस्मिन्नेवक्षणेतस्मीनःउडुराजःचंद्रउदगात्
उदितःकिंकुर्वन्दीर्घकालेनदर्शनंयस्यसःस्वप्रियायामुखमरुणेननवकुंकुमेनयथाप्रियोविलिंप
तितथाप्राच्याःककुभोमुखंशंतमैःसुखतमैःकरैःरश्मिभिःअरुणेनोदयरागेणविलिंपन्नरुणीकु
र्वन्नित्यर्थः अत्रापिउडुराजःतथाचर्षणीनांजनानांशुचस्तापस्थानीवमृजन्प्रणयन् २ कुमुद्
विकसनीयंयस्यतंकुमुद्वंतमखंडमंडलंयस्यरमायाआननस्येवआभायस्यतत्पदेशविधेचोदेतथावनं

वनंचतत्कोमलगोभिरंजितंजगौकलंवामदृशांमनोहरं ३॥

११५

115

नलब्धो विनिर्गमो याभिस्ताः प्रागपि तत्स्वभावनायुक्ता तदानीं तत्संगिन्दुरित्यर्थः किंतदानीमेव तं परमात्मानं
श्रीकृष्णं ध्यानतः प्राप्ताः सत्यो गुणमयं देहं जहुरिति श्लोकद्वयेनाह दुःसहेति ननु कथं जहुः परमात्मेति
ज्ञानाभावादित्याशंक्याह जारबुद्ध्यापीति नहि वस्तुशक्तिर्बुद्धिमपेक्षते अन्यथा मत्वापि पीता
मृतवदितिभावः ननु तथापि प्रारब्धकर्मबंधने सति कथं जहुस्तत्राह सद्यः प्रक्षीणबंधना इति ननु क
र्मभोगमंतरे प्रारब्धकर्मक्षीणं भोगेनैव सद्यः क्षीणमित्याह दुःसहेति दुःसहो यः प्रेष्ठविरहः तेन तीव्र

दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमंगलाः १० तमेव प
रमात्मानं जारबुद्ध्यापि संगताः जहुर्गुणमयं देहं सद्यः प्रक्षीणबंधनाः ११ राजोवाच कृष्णं विदुः
परं कान्तं न तु ब्रह्मतया मुने गुणप्रवाहोपरमस्तासां गुणधियां कथं १२ शुक उवाच उक्तं पुर
स्तादेतत्ते चैद्यः सिद्धिं यथा गतः द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः १३ ॥

स्तापः तेन धुतानि निर्गतान्यशुभानि याभिस्ताः अतो ध्यानेन परमात्मप्राप्तिः तत्कालस्वल्पदुःखाभ्यां निःशे
षकर्मक्षयात् गुणमयं देहं जहुरिति ११ ननु यथा पतिपुत्रादीनां वस्तुत्वेऽप्यज्ञानं पितृजनात्मोदः तथा
बुद्ध्यभावात् एवं कृष्णेऽपि ब्रह्मबुद्ध्यभावेन तत्संगतिः कथं मोक्षहेतुरित्याशंकते कृष्णं विदुः परं कान्तमिति
परिहरति पुरोक्तभावः जीवेषु द्वेषतोऽपि ब्रह्मत्वं कृष्णे तु हृषीकेशत्वादनाहतत्वम् अतो न तत्र ब्रह्मबुद्ध्यपेक्षेति
तिनत्तु देही कथमनाहतः स्यादत आह नृणामिति १३ ॥ ॥

श्री
भा॰टी॰
सु॰बो॰
११८

अथवा धर्मोपदेष्टा नोपदेष्टान्येउपदेष्टा धर्मोपदेष्टा हरिस्त्वयि मतिः अस्मासु तु धर्मविजिज्ञासमानासु सा।
तीर्थत्वया धर्मविज्ञापउक्तमेवमेतदस्मानमन्नु धर्मोपदेष्टा किं न भवानात्मेति अथवा यदुक्तं यत्तत्तु पदे।
न ह्लोचरेषु कृपालुनामत्यपि ते स्वामिन् इमति दर्शकाकांक्षेवमित्यर्थः यत्तस्तु भृतो त्वमात्माफलरूपा
यदा यदुक्तं पत्यादि शुश्रूषणं परमं स्वधर्मं इति एवमेतत्तत्वप्रियास्तु उक्तं तदुपदेष्टा उपदेष्टा शुश्रूषणीयत्वेन उपदिश्यमा।
नानां पत्यादीनां पदे अधिष्ठाने उक्तं ईशोन हि ईश्वरमधिष्ठानं विना कोऽपि पतिपुत्रादिर्नास्ति अन्य

कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किं तन्नः प्रसीद परमे
श्वर मा स्म छिन्द्या आशां धृतां त्वयि चिरादरविन्दनेत्र ३३ चित्तं सुखेन भवतापहृतं गृहेषु यन्निर्वि।
शत्युत करावपि गृह्यकृत्ये पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम किं
वा ३४ ॥

त्समाने श्रलमति विस्तभेणापतंस्मदाशां हृदये त्वं प्रार्थयते पूर्वश्लोकद्वयी ३३ कुशलाः स्वात्मा।
निपुणाः रतिं कुर्वन्ति तथा च श्रुतिः किं प्रजया करिष्यामो येषां नोऽयमात्मा लोक इत्यादि किंइत्यतिय
तद्दृष्टाः किं चित्तादीनामपहृतत्वादित्यर्थः ३३ यदस्माकं चित्तमेतावन्तं कालं सुखेन गृहेषु।
निर्विशति स्म ते करावपि गृह्यकृत्ये निर्विशतस्तावपि त्वयापहृतौ सर्वात्मना त्वये ११८

118

अलकावृतमुखं विलोक्येति शेषः तेनेत्याकुंडलयोः श्रीर्ययोस्ते गंडस्थले यस्मिंस्तत् अधरयोः सुधा यस्मिंस्तच्च
तच्च मुखं चेति दत्ताभयं भुजदंडयुग्मं च वक्षः च श्रिया एकमेव रमणं रतिजनकं वीक्ष्य तदास्यः प्रभवाम इति
नन्वत्युपस्थित्यमौपपत्यं तत्राहुः ३९ अंग हे कलानि पदानि यस्मिंस्तत्था आयतं दीर्घं मूर्छितं स्वरा
लापभेदस्तेन पाठांतरे कलपदामृतमयवेणुगीतेन संमोहिता का वा स्त्री आर्यचरितान्निजधर्मान्न

वीक्ष्यालकावृतमुखं तव कुंडलश्रीगंडस्थलाधरसुधं हसितावलोकं दत्ताभयं च भुजदंडयुगं वि
लोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ३९ कास्त्र्यंग ते कलपदामृतवेणुगीतसंमोहितार्य
चरितान्न चलेत्त्रिलोक्यां त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्
४० व्यक्तं भवान्व्रजजनार्तिहरोभिजातो देवो यथादिपुरुषः सुरलोकगोप्ता तन्नो निधेहि क
रपंकजमार्तबंधो तप्तस्तनेषु च शिरःसु च किंकरीणां ४१ श्रीशुक उवाच इति विक्लवितं तासां श्रु
त्वा योगेश्वरेश्वरः प्रहस्य सदयं गोपीरात्मारामोप्यरीरमत् ४२ ताभिः समेताभिरुदारचेष्टितः
प्रियेक्षणोत्फुल्लमुखीभिरच्युतः उदारहासद्विजकुंददीधितिर्व्यरोचतैणांक इवोडुभिर्वृतः ४३
उपगीयमान उद्गायन्वनिताशतयूथपः मालां बिभ्रद्वैजयंतीं व्यचरन्मंडयन्वनं ४४ नद्याः पुलि

[illegible]

तीधर्मान्न चलेत् यन्मोहिताः पुरुषा अपि चलिताः किंच त्रैलोक्यसौभगमिदं रूपं निरीक्ष्य पुलकान्यबिभ्रन्
स्थावरादयोपि हृष्टा अपि पुलकितोपि तु मा अपि मृगादीनामपि तत्कथाश्रवणमात्रेणापि त्यक्तनिजधर्मपरित्या
गोस्माकं किं पुनस्त्वद्रूपभवेनेति भावः ४० व्यक्तमिति ४१ विक्लवितं पारवश्यप्रलपितं गोपीररीरमत् र
मयामास ४२ प्रियस्येक्षणेनोत्फुल्लानि प्रफुल्लानि मुखानि यासां ताभिः उदारहासः च द्विजाश्च ते कुंदश्च समवा

[illegible] ११९

श्री
भा० द०
पू० टी०
१२५

सं

वनाद्वनांतरं गच्छंत्यो विचिक्युः मृगयन्त्यः उन्मत्तवदुन्मत्तकमाह वनस्पतीन्पप्रच्छुः भूतेषंतरं मध्ये संतं पुरुषं बहि
श्च संतमिति तत्स्वपंचयतिनवभिः तत्र महत्त्वादेतान्पप्रच्छुरित्याह अश्वत्थादीन्पृच्छंति हे अश्वत्थादयः दृष्टो वः इति ४ प्रेम
हाससहितैरवलोकनैरस्माकं मनो हृत्वा गतोऽश्वत्थप्लक्षन्यग्रोधाः युष्माभिः किं दृष्टः इति ५ महीनाः स्वपुष्पैर्हे पुष्प
कालिणाश्चेति हेतोः कुरवकादीन्पृच्छंति हे कुरवकादयः दर्पहरस्मितं यस्य सः इतो गतः कच्चिदिति ६ अ
लिकुलैः सह त्वा त्वां बिभ्रत् तव अतिप्रियः त्वया किं दृष्टः इति ७ गुणातिरेकेण प्रत्यक्षत्वात् हिमाः य पप्रच्छुरिति मालत्या

गायंत्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनं पप्रच्छुराकाशवदंतरं बहिर्भूतेषु संतं पुरुषं
वनस्पतीन् ४ दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः नंदसूनुर्गतो हृत्वा प्रेमहासावलोकनैः
५ कच्चित्कुरवकाशोकनागपुन्नागचंपकाः रामानुजो मानिनीनामितो दर्पहरस्मितः ६ कच्चि
त्तुलसि कल्याणि गोविंदचरणप्रिये सह त्वालिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ७ मालत्यदर्शि
वः कच्चिन्मल्लिके जाति यूथिके प्रीतिं वो जनयन्यातः करस्पर्शेन माधवः ८ चूतप्रियालपनसास
नकोविदारजंब्वर्कबिल्वबकुलाम्रकदंबनीपाः येऽन्ये परार्थभविका यमुनोपकूलाः शंसंतु कृष्ण
पदवीं रहितात्मनां नः ९

दीन्पृच्छंति हे मालति मल्लिके मातिर्यूथिके वो युष्माभिः किमदर्शि दृष्टः करस्पर्शेन वः प्रीतिं जनयन् किं यात
इति अत्र मालतीजात्योरवांतरविशेषाद्दृष्टव्यमिति पोषः ८ फलादिभिः सर्वप्राणिनामेतत्पंकायेतपप्रच्छु
रिति चूतादीन्पृच्छंति हे चूतादयः येऽन्ये च परार्थभाविकाः परार्थं परोपकारार्थं भाविकं जन्म येषां ते यमुनो
पकूलाः यमुनायाः कूलसमीपे वर्तमानाः तीर्थवासिन इत्यर्थः हे भवंतः रहितात्मनां शून्यचेतसां नः
कृष्णपदवीं मार्गं शंसंतु कथयंतु अत्र चूतात्प्रियालयोरवांतरजातिभेदः कदंबनीपयोश्च ९ ॥

१२५

120

बाहुप्रसारश्च परिरंभश्च करादीनामालंभनं स्पर्शनं च नर्म परिहासश्च नखाग्रपातश्च तैः क्ष्वेल्या क्रीडया च अवलो
कहसितैश्च कामं तासामुद्दीपयन् तारमयामास ४६ महात्मनो विमुक्तचित्तात् ४७ तत्सौभगमदं मद
धीनत्वाभिमानेन गर्वं च केशवः कं च ईशं च वशयतीति केशवः तथा मानः ४८ इति श्रीभावार्थदीपिकायां दशमे एकोनत्रिं
शः २९ त्रिंशे विरहसंतप्ता गोपीभिः कृष्णमार्गणम् उन्मत्तवद्वने यत्र भ्रमन्तीभिर्वने वने अचक्षाणाः अपश्य
न्त्यः १ गत्या च अनुरागस्मिताभ्यां विभ्रमेक्षितानि विलासनिरीक्षितानि तैश्च मनोरमा आलापाश्च विहाराश्च

बाहुप्रसारपरिरंभकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणा
मुत्तंभयन् रतिपतिं रमयांचकार ४६ एवं भगवतः कृष्णाल्लब्धमाना महात्मनः आत्मानं मेनिरे स्त्रीणां मानि
न्योऽभ्यधिकं भुवि ४७ तासां तत्सौभगमदं वीक्ष्य मानं च केशवः प्रशमाय प्रसादाय तत्रैवान्तरधीयत
४८ इति श्रीभागवते दशमस्कन्धे एकोनत्रिंशोऽध्यायः २९ श्रीशुक उवाच अन्तर्हिते भगवति सहसैव व्र
जाङ्गनाः अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् १ गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापवि
हारविभ्रमैः आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः २ गतिस्मितप्रेक्ष
णभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः

क्रीडाश्च विभ्रमा अन्ये विलासास्तैश्च रमापतेर्गत्यादिभिरेतैर्गतिस्मितादिभिराक्षिप्तानि चित्तानि यासां ताः अतस्तस्मिन्नेवा
त्मा यासां ताः तस्य विविधाश्चेष्टा जगृहुस्तदनुकरणेनाक्रीडन् २ प्रियस्य गत्यादिषु प्रतिरूढा आविष्टा मूर्तयो या
सां ताः अतः कृष्णविहारविभ्रमाः कृष्णस्येव विहारविभ्रमाः क्रीडाविलासा यासां ताः अहमेव कृष्ण इति परस्परं नि
वेदितवन्त्यः ३ ॥

ननुस्वपतिसंगतोनतत्संगतिर्दृष्टेत्यतआहुर्वनस्पतेःपत्युर्बाहूनाश्लिष्टाअपिमुहुर्लोभाद्यन्नूनंतन्नखैःस्पृष्टायतउत्पुलका
निबिभ्रतिनहिस्वपतिसंगमात्रादेवंपुलकसंभवइतिभावः १३ उन्मत्तवत्प्रश्नकृत्येवंतन्मयपर्यवसितास्तदानींरमापतेःता
लाविशेषाअनुचक्रुःतदात्मिकाइतियदुक्तंतत्प्रपंचयतिइतीति उन्मत्तवचोगोप्यउन्मत्तवचसस्तास्तागोप्यश्चकृष्णान्वे
षणेनकातराःअतिविह्वलाअनुचक्रुःअनुकृतवत्यः १४ कस्याश्चिदित्यादिभिश्चतुर्भिस्तत्करणप्रपंचयतिततः

पृच्छतेमालतावाहूनप्याश्लिष्टावनस्पतेः नूनंतत्करजस्पृष्टाबिभ्रत्युत्पुलकान्यहो १३ इत्युन्मत्तवचो
गोप्यःकृष्णान्वेषणकातराः लीलाभगवतस्तास्ताह्यनुचक्रुस्तदात्मिकाः १४ कस्याश्चित्पूतनायन्त्याः
कृष्णायन्त्यपिबत्स्तनं तोकायित्वारुदत्यन्यापदाहञ्छकटायतीं १५ दैत्यायित्वाजहारान्यामेकाकृष्णा
र्भभावनां रिंगयामासकाप्यंघ्री कर्षन्तीघोषनिःस्वनैः १६ कृष्णरामायितेद्वेतुगोपायन्त्यश्चका
श्चन वत्सायतींहन्तिचान्यातत्रैकातुबकायतीं १७ आहूयदूरगायद्वत्कृष्णस्तमनुवर्ततीं वेणुंक्वणं
तींक्रीडन्तीमन्याःशंसन्तिसाध्विति १८ ॥

चतुर्भिस्तन्मयत्वेऽप्यनेकेनानुकरणमितिविवेकःपूतनायन्त्याःपूतनावदाचरन्त्याःकृष्णवदाचरन्तीस्तनमपिब
त्तोकायित्वातोकवदाचरन्तीति तदात्मानंकृत्वा १५ दैत्यायित्वेत्यादिदैत्यवदात्मानंकृत्वाएकाकृष्णार्भभावनां
कृष्णस्यार्भवालत्वभावंप्रतिपन्नामन्या ............. १६ दूरगाःदूरेवर्तमानाःगोयद्वद्यथातथाआहूय
तंकृष्णमनुवर्ततीमितिवापाठःअन्यासाधुसाध्वितिप्रशंसन्ति १८ ॥ 

121

हेत्तित्तिकितेनयाकितपः कृतेयातेकेपावांत्रिस्पर्शोत्सवाकेपावस्यांत्रिस्पर्शनोत्सवोयस्याः साऊतःतायतेस्र
गकेहेकस्तुल्कितारोमोवितावभासिपोभमेतत्रविधेपुपृच्छति अपिकिमयमुत्सवःत्रेत्रिस्पर्शासेभवःतवेवेदेपा
त्रिस्पर्शोसेभूतःयद्वानेतावतकितउरुक्रमविक्रमात्मूवेमवत्रिविक्रमस्यपदासर्वाक्रमणात् अहोअयवानेता
वदेवअपिननतोपिपूर्वेवगाहवपुषःपरिभ्रमणेनेति अतस्त्वयानूनंदृष्टस्तदर्पायति १ हरिणाहदृष्टप्रमन्नाक

कितेकृतेत्तित्तिपोवतकेपावांत्रिस्पर्शोत्सवोन्नुल्लिकितागरुहेर्विभासि अयंत्रिसेभवउरुक्रमविक्रमवा
राहोवगाहवपुषःपरिभ्रमेणेन १ अयेणापत्न्युपगतःप्रिययेहगात्रैस्तन्वन्दृशांसखिसुनिर्वृतिमच्युतोवः
कान्तांगसंगकुचकुंकुमरंजितायाःकुंदस्रजःकुलपतेरिहवातिगंधः ११ बाहुंप्रियांसउपधायगृहीतप
ओरामानुजस्तुलसिकालिकुलैर्मदांधैः अन्वीयमानइहवस्तरवःप्रणामंकिंवाभिनंदति
चरन्प्रणयावलोकैः १२ ॥ ॥

स्तदर्शनेसंभाव्याहुः अपीतिहेसखिएणपत्न्युपगतःसमीपंगतःगात्रैःसुंदरैःमुखबाहादिभिःप्रिययासहे
तियद्वाकेशोनयतिकांतायाःअंगसंगोद्भूतकुचकुंकुमेनरंजितायाःकुंदकुसुमस्रजोगंधःकुलपतेःश्रीकृष्णस्य
वातिआगच्छति ११ फलभारेणनतांस्तरून्दृष्ट्वाहदृष्टाप्रणामानितिमत्वाप्रिययासहतस्यागतिविलाससंभावा
येन्यःपृच्छंतिबाहुमितितुलसिकायाअलिकुलैःअतःतदामोदमदांधैःअन्वीयमानःअनुगम्यमानःइहवयानिति
१२ काश्चिदाहुःहेसख्यःइमालताःकृष्णेनसंगतानूनंइमाःपृच्छत १३ ॥

एकत्रिंशेऽध्याये गोप्यः कालिंद्याः पुलिनमागताः कृष्णमेवानुध्यायंत्यः प्रार्थयंते तदागमं हे दयित ते जन्मना
व्रजः यथाधिकं भवति तथा जयति उत्कर्षेण वर्तते यस्मात्त्वमत्र .... तस्मादिंदिरा लक्ष्मीः अत्र हि
शश्वदनुवर्तते एवं व्रजे सर्वस्मिन्नानंदमाने अत्र तव तावकाः त्वदीयाः गोपीजनाः त्वयि तदर्थमेव कथंचि
द्धृतासवः धृता असवो यैस्ते त्वां विचिन्वते अतः त्वया दृश्यतां प्रत्यक्षीभूयतामिति यद्वा अस्माभिर्भवान्
दृश्यतामिति यद्वा एवं त्वया दृश्यतामिति त्वां विचिन्वते इति अत्र स्वतंत्रा .... वेहृतावकत्वाद्दयाप्रा
हारिति सर्वलोकेषु वत्तारणार्थं त्वयि पिशंगतिरुच्यते अधिचिन्वंतमम किमिति चेत्तदाह शरदिति शरदु

गोप्य ऊचुः जयति तेऽधिकं जन्मना व्रजः श्रयत इंदिरा शश्वदत्र हि दयित दृश्यतां दिक्षु तावका
स्त्वयि धृतासवस्त्वां विचिन्वते १ शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा सुरत
नाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः २ ॥

उदाशये शरत्काले निर्मले जलाशये साधुजातं सम्यग्जातं सत्सरसिजं तस्य उदरस्य श्रियं मुष्णातीति तया हे सुरतनाथ विकसिते
पद्मे तस्योदरस्य गर्भस्य श्रीः तां मुष्णाति हरतीति तथा तया दृशा ते तव अशुल्कदासिकाः हे वरद अस्माभिः
प्रदत्तं अशुल्कदासिका अमूल्यदासीः ताः निघ्नतो मारयतः तेन त्वया क्रियमाणः इह लोके अयं वधो न भवति
किं यावत्वेनैव वधो नैव भवति किंतु भवत्येव अतः आत्मवधपापं जगदाय त्रायत्वा त्वया दृश्यतामिति ।
यथासंभवं सर्वत्र वाक्यशेषः २ ॥ ॥ 

हे व्रजजनार्तिहन् हे वीर निजजनानां यः स्मयो गर्वः तस्य ध्वंसनं येनाथाकंस्मितं यस्य तेन तथाभूत हे सखे भव किं-
करीर्नः अस्मान् भज आश्रयत्वेनेति निश्चितम् अथ मत्ता वा तर्हि जलरुहाननं चारु योषितां नो दर्शय ६ अविशे-
षणं प्रणतानां देहिनां पापकर्षणं पापहरणं तृणचरान् पशून् अनुगच्छतीति कृपयेति तथा सौभाग्येन श्रियो
निकेतनं वीर्यातिरेकेण फणिनः कालियस्य फणास्वर्पितं ते पदाम्बुजं नः कुचेषु कृणु कुरु किमर्थं हृच्छया-

व्रजजनार्तिहन्वीर योषितां निजजनस्मयध्वंसनस्मित भज सखे भवत्किंकरीः स्म नो जलरुहाननं चा-
रु दर्शय ६ प्रणतदेहिनां पापकर्षणं तृणचरानुगं श्रीनिकेतनं फणिफणार्पितं ते पदाम्बुजं कृ-
णु कुचेषु नः कृन्धि हृच्छयं ७ मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण विधिकरीरि-
मावीरधरसीधुनाप्याययस्व नः ८॥

कामं कृन्धि ७ हे पुष्करेक्षण त्वमेवं मधुरया गिरा वल्गूनि रम्याणि वाक्यानि यस्यां तया बुधानां मनोज्ञया
हृच्छयाय मोहयेत्यर्थः मुह्यतीर्विमानाः विधिकरीः अधरसीधुना अधरामृतेन आप्यायस्व संजीवयेति किं-
चास्माकं त्वद्विरहेण प्राणमेव न रोकितं त्वत्कथामृतपाययद्भिः सद्भिः
र्वञ्चितमित्याहुः तवेति ८॥ ॥ 

124

त्वेत् दिनपरिक्षये सायंकाले नीलकुन्तलैरावृतं येन रजस्वलं गोरजःछुरितं वनरुहाननं अलिमालापराग
रितं यथा तथा मानने बिभ्रत् नस्मान्मुहुर्दर्शयन् नो मनसि केवलं स्मरं यच्छसि स्थापयसि न तु संगं ददा
सीत्युपालम्भ इति भावः अतोऽधुना कपटं विहाय चरणं सिंति प्रार्थयन्ते श्लोकद्वयेन १२ हे आधिहन् हे रमण
पद्मजेन ब्रह्मणार्चितं आपदि ध्येयं धरण्या मण्डनं निवर्तकं च पानं तत्समये सेवा समये ताप्यतिशयं तव चरणा
णाकमलकान्ता पयर्पयेन यतः स्तनेष्वर्पयेति १३ अपि च हे वीर ते अधरामृतं नो वितर देहि कथंभूतमधरामृतं स्व
नितेन नादितेन वेणुना सुष्ठु चुम्बितमिति नादामृतवासितमिति भावः इतररागविस्मारणं नृणां इतरेषु भावे

दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतं घनरजस्वलं दर्शयन्मुहुर्मनसि नः स्मरं वीर
यच्छसि १२ प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि चरणपंकजं शन्तमं च ते रमण
नः स्तनेष्वर्पयाधिहन् १३ सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितं इतररागविस्मा
रणं नृणां वितर वीर नस्तेऽधरामृतं १४ अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यतां कु
टिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् १५ ॥ ॥

भौमादिराज्यस्वर्गेषु रागमिच्छां विस्मारय
ति विलोपयतीति तथा तत्। किंच क्षणमपि त्वद्दर्शनेन सुखमदर्शनेन च दुःखं हे हृष्टा सर्वमार्गं परित्यागेन य
तद्वयं त्वामुपागताः तेन करुणं मस्मास्वयुक्तं तन्मुंचेति सकरुणमाहुः अटतीति द्वयेन १४ यद् यदा भवा
न् काननं हे रावनं प्रति अटति गच्छति तदा त्वामपश्यतां प्राणिनां त्रुटिः क्षणार्धमपि युगवद्भवति एवमदर्शने दुः
खमुक्तं पुनस्तत्स्वकर्णे विधिनोतेन तव श्रीमत्मुखं उदीक्षमाणानां तेषां दृशां पक्ष्मकृत् ब्रह्मा जडः मन्दः इति

कथैवामृतंअत्रहेतुः तप्तजीवनंश्रसिजादन्तःताडस्कर्षमाहुः कविभिर्ब्रह्मविद्भिरपीडितंस्तुतंदेवभोग्यंतु
मृतैःतलक्षीकृतंकिंचकल्मषापहंकाममकर्मनिरसनंतत्त्वमृतंनैवंभूतंकिंचश्रवणमंगलंश्रवणमात्रेणमं
गलप्रदंतत्ततश्चानापेक्षंकिंचश्रीमत्सुप्रशांतंतत्त्वमादकं एवंभूतंत्वत्कथामृतंआहृतंयथाभवतित
थाभुविगृणंतिनिरूपयंतियेजनाःभूरिदाःबहुदातारःजीवितदातारइत्यर्थः यद्वाएवंभूतंत्वत्कथामृतं
येतुभुविगृणंतितेभूरिदाःतेपूर्वजन्मसुबहुदत्तवंतःसुकृतिनइत्यर्थः एतदुक्तंभवतिसर्वत्रयेकेवलंक

तवकथामृतंतप्तजीवनंकविभिरीडितंकल्मषापहं श्रवणमंगलंश्रीमदाहृतंभुविगृणंतिये
भूरिदाजनाः ९ प्रहसितंप्रियप्रेमवीक्षणंविहरणंचतेध्यानमंगलं रहसिसंविदोयाहृदिस्पृशः
कुहकनोमनःक्षोभयंतिहि १० चलसियद्व्रजाच्चारयन्पशून्नलिनसुंदरंनाथतेपदं शिलतृणां
कुरैःसीदतीतिनःकलिलतांमनःकांतगच्छति ११ ॥

थामृतंगृणंतितेपितावद्दतिधन्याः किंपुनःयेत्वांपश्यंतिअतःप्रार्थयामहेत्वयाहपश्यतामिति ९ ननुतर्हि
मत्कथाश्रवणेननिर्वृताभवंत्यःकिमर्थंनेनत्वहितामस्त्वमितचिन्तावयंतत्रापिपातितेनविद्मःकृत्वा
हुःप्रहसितमिति ८ हेप्रियहेकुहककपटसंविदःसंकेतनर्माणिकिंचत्वद्विषयमतिप्रेमार्द्रचित्ताःसंपु
नःक्षुभ्यामःकेनहेतुनाकपटमाचरसीत्याहुःशोकहेतुंनचलसीति १० हेनाथकान्तयद्यदाव्रजाच्चालयसि
पशून्चारयसितदातेनलिनसुंदरंकोमलंतेपदंशिलैःकणिशैःतृणांकुरैश्चसीदतिक्लिश्यतीतिनोमनः

कलिलतामस्वास्थ्यंगच्छतिप्राप्नोतिएवंभूताश्चतावद्वयंअरण्येकिं
नचिन्तावयं ११ ॥

इति श्रीभागवते दशमस्कन्धे एकत्रिंशोऽध्यायः ३१ द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः तत्राविर्भूय गोपीस्तास्तोषयामास मानयन् स्वसमागतकल्लोलविह्वलीकृतचेतसः सहृदयं नंदयन्गोपीहृद्गतो नंदनंदन इति इत्येवंप्रभृत्य चित्रधा अनेकधा प्रेमयुक्तास्सुस्वरमुच्चैः कृष्णदर्शने लालसा अभिलाषो यासां ताः १ साक्षान्मन्मथमन्मथः जगन्मोहनस्य कामस्यापि मनसो मंथनः कामः साक्षात्तस्यापि मोहकः

इति श्रीभागवते दशमस्कन्धे एकत्रिंशोऽध्यायः ३१ शुक उवाच इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः १ तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः २ तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतं ३ काचित्कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा काचिद्दधार तद्बाहुमंसे चंदनभूषितं ४ काचिदञ्जलिनागृह्णात्तन्वी ताम्बूलचर्वितं एका तदंघ्रिकमलं संतप्ता स्तनयोरधात् ५ एका भ्रुकुटिमाबध्य प्रेमसंरंभविह्वला घ्नतीवैक्षत्कटाक्षेपैः संदष्टदशनच्छदा ६ अपरानिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजं आपीतमपि नातृप्यत्संतस

त्यर्थः २ तन्वः करचरणादयः ३ अंजलिना संहतहस्तद्वयेन ४ भ्रुकुटिमाबध्य प्रेमसंरंभेण प्रणयकोपावेशेन विह्वला विवशा दष्टाधरोष्ठा कटाक्षैः कटाक्षतानैर्ये श्रान्तेपाः परिभवाते ताड्ये ऽगुरुवेलात ६ अनिमिषद्दृग्भ्यां आपीतमपि सम्यग्दृष्टमपि पुनः पुनर्जुषाणा नातृप्यत् ७



126

गोपीसभागतः ताभिः संमानितः सन् चकास त्रैलोक्यस्य या लक्ष्मीः शोभा तस्या एकमेवप
दं स्थानं तद्वपुः प्रकटयन् १४ तत्र भगवतोऽकृतज्ञतां तद्वचनेनैवादयितुकामाः सूक्ष्माभि
प्रायालोकवृत्तांतमिव पृच्छंतीति भजत इत्याह १५ भजतः प्राणिनः प्रत्यनुभजंति केचिज्जनाः अनु
सारेण भजंति केचित्तद्विपर्ययं यथा भवति तथा तद्भजनमनपेक्ष्याभजतोपि भजंति।

तत्रोपविष्टो भगवान्स ईश्वरो योगीश्वरांतर्हृदिकल्पितासनः। चकास गोपीपरिषद्गतो
र्चितः त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् १४ सभाजयित्वा तमनंगदीपनं सहासलीलेक्षण
विभ्रमभ्रुवा संस्पर्शनेनांककृतांघ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे गोप्यऊ
चुः भजतोनुभजंत्येक एक एतद्विपर्ययं नोभयांश्च भजंत्येक एतन्नो ब्रूहि साधु भोः १६
श्रीभगवानुवाच मिथो भजंति ये सख्यः स्वार्थैकांतोद्यमा हि ते न तत्र सौहृदं धर्मः स्वा
र्थार्थं तद्धि नान्यथा १७ भजंत्यभजतो ये वै करुणाः पितरो यथा धर्मो निरपवादो
त्र सौहृदं च सुमध्यमाः १८

अन्ये ततोऽभयानिति विदिताभिप्रायः श्रीभगवानाह मिथ इति १६ हे सख्यः उपकारप्रत्युपकार
तया ये मिथो भजंति ते अन्योन्यं भजंते किंत्वात्मानमेव यतः हि यस्मात्स्वार्थैकांतोद्य
मा येषां ते तत्र न सौहृदं मतेनास्य न च धर्मो हृष्टादेपात् गौणं हि त्यादि भजनवदित्यर्थः
१७ ये त्वभजतो भजंते ते द्विविधाः करुणाः स्निग्धाश्च तत्र यथाक्रमेण मेकाभवतीत्याह



127

ललाणमेवौत्सुक्याप्तमनसां सस्त्रीकानां देवानां विमानपातैः संकीर्णं नभो बभूव ५ सप्रियाणां स्त्रीकलस
हितानां तमलसंकीर्णाः २ महामरकतो नीलमणिरिव हेमानां मध्ये ताभिः स्वर्णवर्णाभिराजिह्वाभिः शुशुभे
गोपीदृष्टाभिप्रायेण चिन्तैवमथ पदाहतिमेकवचनं ८ सयष्ठा ताभिः शुशुभे तयाता श्रुपिनेतरे ज्ञात्या
हृपादन्यासैरिति रविकान्तिभिः करचालनैर्भज्यमानैर्मध्यैः चलद्भिः ऊर्ध्वेषु उत्तरीयवस्त्रैर्गण्डफालैः गण्डे

यामन्येरन्ननभस्तावद्विमानपातसङ्कुले दिवौकसां सदा गणामौत्सुक्यापहृतात्मनां ५ ततो
दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलं ६ वलयानां नूपुरा
णां किंकिणीनां च योषितां सप्रियाणामभूच्छब्दस्तुमुलो रासमण्डले ७ ततोऽभिशुशुभे ताभि
र्भगवान्देवकीसुतः मध्ये मणीनां हैमानां महामारकतो यथा ८ पादन्यासैर्भुजविधुतिभिः
सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः स्विद्यन्मुख्यः कवररशनाग्रन्थयः
कृष्णवध्वो गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ९ ॥

चुकपोलेषु चञ्चलैः स्विद्यन्मुख्यः स्विद्यति स्वेदमङ्गीरोति स्वस्त्र्यो नियामीता कवरेषु रशनानां च ग्रन्थयः स्रस्ता
या सीताः यद्वा तेषु ता स्वच ग्रन्थयः शिथिलग्रन्थयः कृष्णवध्वः तत्र नानामूर्तिः श्रीकृष्णो मेघचक्रमिता
स्तद्बहुविधाः तडित इव स्वेदस्तधारमिव गीते गर्जितमिवेति यथासंभवमूह्यं ९ ॥ ॥

कर्णोत्पलैश्चालकविटंकैरलकालेहृतैः कपोले स्वेदगर्भैश्च वक्त्रेषु श्रीर्याभा यासां ताः वलयनूपुरघोषैर्वा
द्यैर्वादित्रैः स्रजो यासां ताः स्रस्तेन तालगतिसेवद्याः केशाः स्रगिरः केशपादेषु पुष्पवृष्टिमिवाकुर्वन्नित्यर्थः
त्तितिभगवतासह ननृतुर्भ्रमरा एव गायकाः यस्यां रासे सभायां १८ यथा गोप्यो भगवता सह विजह्रुः
एवं श्रीभगवानपि स्वविलासैस्ताभिः सह रेमे इत्याह एवमिति तद्विलासानुभितस्यैवर्त्तीह द्योतः यथार्भक
इति स्वप्रतिबिम्बैर्विभ्रमैः क्रीडा यस्य सत्वस्त्रनैनैतद्दर्शितं स्वयमेव सर्वकालकौशले सौगंध्यमाधुर्येलाव

कर्णोत्पलालकविटंककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः गोप्यः समं भगवता न
नृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्यां १८ एवं परिष्वङ्गकराभिमर्शस्निग्धेक्ष
णोद्दामविलासहासैः रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रमः १९ तदङ्गसङ्गप्र
मदाकुलेन्द्रियाः केशान्दुकूलं कुचपट्टिकां वा नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभर
णाः कुरूद्वह २० ॥ ॥

णादिभिस्तासां संस्पर्शार्थं ताभिः सह रेमे यथार्भकः स्वप्रतिबिम्बैरिति १९ तासां भगवद्विलासैर्व्याकुला बभूवु
रित्याह तस्यांगसंगेन प्रकृष्टा मुत् प्रीतिस्तया आकुलानि इन्द्रियाणि यासां ताः विस्रस्तवेषात्
केशादीन् अञ्जसा प्रतिव्योढुं यथापूर्वं धर्तुं नालं समर्था न बभूवुः विस्रस्तमाला आभर
णानि यासां ताः २० ॥ ॥

श्री° भा° द° टी° १३१

परमेश्वरे कैमुत्यन्यायेन परिहर्त्तुं सामान्यतो महतां वृत्तमाह धर्मव्यक्रमः इति साहसमेव दृष्टं प्रजापती
न्द्रसोमविश्वामित्रादीनां ``` तेषां तेषां तेजस्विनां ```` ३२ तर्हि यद्यदाचरति श्रेष्ठ इति न्यायेन
नान्योपि कुर्यादित्याशंक्याह नैतदिति अनीश्वरो देहादिपरतंत्रः यथा रुद्रव्यतिरिक्तो विषं भक्ष
यन्नश्यति तर्हि सदाचारस्य प्रामाण्यं न स्यादत आह ईश्वराणामिति ३३ तेषां वचः सत्यमतस्तदुक्तमाचरेत् क्व
आचरितं तु क्वचित् अतः स्ववचोयुक्तं तेषां स्ववचसा यत्कर्माविरुद्धं तत्स्वाचरेत् नतु तद्विपरि

नैतत्समाचरेज्जातु मनसापि ह्यनीश्वरः विनश्यत्याचरन्मौढ्याद्यथा रुद्रोब्धिजं विषं ३३ ईश्व
राणां वचः सत्यं तथैवाचरितं क्वचित् तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्समाचरेत् ३४ कु
शलाचरितेनैषामिह स्वार्थो न विद्यते विपर्ययेण वानर्थो निरहंकारिणां प्रभो ३५ किमुता
खिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसां ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ३६ यत्पाद
पंकजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबंधाः स्वैरं चरंति मुनयोपि न नह्य
मानास्तस्येच्छयात्तवपुषः कुत एव बंधः ३७ ॥ ॥

मेवेत्याह समाचरेदिति तत्राह कुशलेति ३४ आरब्धकर्मक्षपणमात्रमेव तेषां कृतेनान्यदित्यर्थः
प्रस्तुतमाह किमुतेति ३५ कुशलाकुशलान्वयो न विद्यत इति किं पुनर्वक्तव्यमित्यर्थः पुनरेवं स्फुटय
ति ३६ यस्य पादपंकजपरागनिषेवनेन तृप्ताः यद्वा यस्य पादपंकजपरागनिषेवया येषां तेन तृप्तास्तेवत्
माश्रेति मत्वा इत्यर्थः तथा ज्ञानिनस्तु न नह्यमानाः बंधनेन प्राप्नुवंतः ३७ परदारत्वं गोपीनामसंगी
कृत्वा परिहृतं इदानीं श्रीभगवतः सर्वांतर्यामिनः परमेवानाम न काचिदित्याह गोपीनामिति ३८ १३१

131

स्वरतिरात्मारामोऽपि स्त्रग्गोपीमण्डले प्रेमभ्रमितवान् स्थलजलक्रीडे दर्शितवनक्रीडां दर्शयति २६ यमुनायाउ
पवने जलस्थलप्रसूनानां गन्धो यस्मिंस्तेनानिलेन जुष्टा दिक्तटा दिशान्तरं यस्मिन् यद्वा दिशाश्चतटेचा
स्थलेच यस्मिन् तस्मिन् वने भृङ्गाणां प्रमदानांच गणैरावृतः २७ रासक्रीडां निगमयति एवमिति सत्यकामः
सत्यसंकल्पः अनुरतः अपि स्त्रीकदम्बकः एवं सर्वा निशाः सेवितवान् शरत्काव्यकथारसाश्रयः शरदि भवाः का
व्येषु कथ्यमाना ये रसाः तेषामाश्रयभूता निशाः यद्वा निशाद्युत्यन्तयोगो ह्लिनी याः शृङ्गाररसमाश्रयाः शर

सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग वैमानिकैः कुसुमवर्षिभिरी
ड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः २६ ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे च
चार भृङ्गप्रमदागणावृतो यथा मदच्युद् द्विरदः करेणुभिः २७ एवं शशाङ्कांशुविराजिता निशाः
स सत्यकामोऽनुरताबलागणः सिषेव आत्मन्यवरुद्धसौरतः सर्वाः शरत्काव्यकथारसाश्रयाः
२८ राजोवाच संस्थापनाय धर्मस्य प्रशमायेतरस्य च अवतीर्णो हि भगवानंशेन जगदीश्वरः २९
स कथं धर्मसेतूनां वक्ता कर्ताभिरक्षिता प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनं ३० आप्तकामो य
दुपतिः कृतवान् वै जुगुप्सितं किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ३१ ॥ ॥

दिभवाः काव्येषु च याः कथाः ताः सिषेवे इति एवमात्मन्यवरुद्धसौरतः चरमधातुः न तु स्खलितो य
स्येति कामजयोक्तिः २८ प्रतीपं प्रतिकूलमधर्ममित्यर्थः आचारः कृतवान् न चैवाधर्मं मा भूत् फलं कलंजो
भक्षणादिवत् किन्तु महतां स्माहस्यिकमित्याह परदाराभिमर्शनमिति ३० आप्तकामस्य न तावदधर्मः इति चे
त् यद्येवं कामाभावात् तर्हि केनाभिप्रायेण कृतवान् इति पृच्छति सकाम इति ३१ ॥

योंतःचरतिस्रध्यक्षोबुध्यादिसाक्षीसएवक्रीडनेनदेहभाक् नत्वस्मदादितुल्यःयेनदोषःस्यादितिनन्वेवंचेत्
आत्मकामश्चेदितिजातःस्पृहत्तिरित्यतआह ३५ स्पृगारसाक्षस्फुचेतसःप्रतिवहिर्मेवेनापिस्वपयनस्वाधी
नात्मकर्मेतिभावःनत्वन्येपितत्राचारःस्वचेष्टितेमत्वेचेतिवदतितत्राहनासूयन्निति ३७ एवंशैवर्या
भावेतथ्याकुर्वतिःपापान्तेयाइत्यर्थः ४० ब्रह्मरात्रेउपाहमेप्राह्ने इसे ४१ भगवतःकामविजय

गोपीनांतत्पतीनांचसर्वेषामेवदेहिनां योंतःचरतिसोध्यक्षःक्रीडनेनहदेहभाक् ३५ अनुग्र
हायभक्तानांमानुषंदेहमाश्रितः भजतेतादृशीःक्रीडाःयाःश्रुत्वातत्परोभवेत् ३६ नासूयन्खलु
कृष्णायमोहितास्तस्यमायया मन्यमानाःस्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ४० ब्रह्म
रात्रउपावृत्तेवासुदेवानुमोदिताः अनिच्छन्त्योययुर्गोप्यःस्वगृहान्भगवत्प्रियाः ४० विक्रीडितंव्र
जवधूभिरिदंचविष्णोःश्रद्धान्वितोनुशृणुयादथवर्णयेद्यः भक्तिंपरांभगवतिप्रतिलभ्यकामंहृ
द्रोगमाश्वपहिनोत्यचिरेणधीरः ४२ इतिश्रीभागवतेदशमेत्रयस्त्रिंशः ३३ शुकउवाच एक
दादेवयात्रायांगोपालाजातकौतुकाः अनोभिरनडुद्युक्तैःप्रययुस्तेंबिकावने १ तत्रस्नात्वासर
स्वत्यांदेवंपशुपतिंविभुं आनर्चुरर्हणैर्भक्त्यादेवींचनृपतेंबिकां २ ॥ ॥

नृपरासक्रीडाश्रवणादेःकामजयफलमाह विक्रीडितमिति अचिरेणधीरःसन्हृद्रोगंकाममाश्वप
हिनोतित्यजतीति ४२ सयंश्रीपरमानंदसेविश्रीधरनिर्मिता श्रीभागवतभावार्थदीपिकादशमाश्र
या ४२ इतिश्रीभावार्थदशमेत्रयस्त्रिंशः ३३ चतस्त्रिंशेहिनाग्रस्तंनंदंहरिरमोचयत् विद्याध्रंचाग्नि
रःपापाद्धविहरंतथावधीत् रामायदेपातःकामेकिंकरीकृतकामतः अत्रदृष्टान्तपानिन्येतथा

यतः पापान् लोकगुरुणा त्रैलोक्यनाथेन १४ आपृच्छे त्वं लोके गन्तुमनुज्ञां याचे अमी च हन्तु दुःखेन पापान
१५ तत्प्रसंगमाहुः कदाचिदिति २२ विरजसी निर्मले अवेरयण्यामा २३ किंच निपाय प्रवेशमाने पौत्रोऽदितः उज्ज्यः

पापो मेनुग्रहायैव कृतस्तैः करुणात्मभिः यदहं लोकगुरुणा पादस्पृष्टो हताशुभः १४ तं त्वाहं भ
वभीतानां प्रपन्नानां भयापह आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन् १५ प्रपन्नोस्मि महायोगि
न्महापुरुष सत्पते अनुजानीहि मां देव सर्वलोकेश्वरेश्वर १६ ब्रह्मदण्डाद्विमुक्तोहं सद्यस्तेच्युत
दर्शनात् यन्नाम गृह्णन्नखिलान् श्रोतॄनात्मानमेव च १७ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः
पदा हि ते १८ इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवन्द्य च सुदर्शनो दिवं यातः कृच्छ्रान्नन्दश्च मोचितः
१९ निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः समाप्य तस्मिन्नियमं पुनर्व्र
जं गोपा ययुस्तत्कलयन्त आदृताः २० अहिर्देहे निहत्यैव प्राग्जन्मनि सुदर्शनं तद्दुह्मादितो ह
ष्णः पालितहृष्टमनाः इयत् २१ कदाचिदथ गोविन्दो रामश्चाद्भुतदर्शनः विजह्रतुर्वने रात्र्यां मध्यगौ व्र
जयोषितां २२ उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः स्वलंकृतानुलिप्ताङ्गौ स्रग्विनौ विरजों
बरौ २३ निशामुखं मानयन्तावुदितोडुपतारकं मल्लिकागन्धमत्तालिजुष्टं कुमुदवायुना २४ ॥
जगतुः सर्वभूतानां मनःश्रवणमंगलं तौ कल्पयन्तौ युगपत्स्वरमण्डलमूर्छितं २५ ॥

तारकाश्च यस्मिंस्तत् मल्लिकागन्धेन मत्ता अलयो यस्मिंस्तत् २३ अनिबद्धत्वादन्यौ द्वौ गायकौ कल्पयित्वा मया क
ल्पितौ स्वरमण्डलमूर्छितं कगायतां कल्पयन्तौ मनःश्रवणयोर्मंगलं यथा भवति तथा जगतुः अगायतां

हे आलि बर्हिणां मयूराणां स्तबका मयूरपिच्छानि धातवो गैरिकादयः पलाशानि तैर्बद्धो मल्ला
नां परिबर्हः परिकरः तं विडम्बयतीत्यनुकरोतीति तथा सबलः सगोपैः सह वेणुना ते ते इति परिजनमध्यापित
नामग्रहणपूर्वकं समाह्वयति तर्हि तदाननमानानन्तरे प्रतिलेनानीतं तस्य पदाम्बुजरजः स्पृहयन्त्य इव भग्नगतयः
सरितः वयमिव स्तिमितापः प्रेमवेपिता भुजाः यासां ताः प्राप्तवतीति केवलं प्रेमावेपिताः कम्पिता भुजा तरङ्गा
स्ताः स्तिमिता निश्चला आपः यासां ताः गोप्योऽपि लोचनदोलिमिताः सजला भवेति ६ अनुचरैः समनु
विविधरूपतस्त्वाहुः अनुचर इति अनुचरैर्गोपैर्देवादिभिर्वा स्तूयमानो वा क आदिपुरुष इति अचलितनिश्च

बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः कर्हिचित्सबल आलि स गोपैर्गाः समाह्वय
ति यत्र मुकुन्दः ६ तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतं स्पृहयतीर्वयमिवाब
हुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ७ अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः वनच
रो गिरितटेषु चरन्तीर्वेणुनाह्वयति गाः स यदा हि ८ वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव
पुष्पफलाढ्याः प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवो ववृषुः स्म ९ दर्शनीयतिलको व
नमालादिव्यगन्धतुलसीमधुमत्तैः अलिकुलैरलघु गीतमभीष्टमाद्रियन्यर्हि सन्धितवेणुः १

लक्ष्मीर्यस्य तेन तां गोलेन ८ वनलतास्तरवश्च भारेण विटपाः शाखा येषां वनलतातरवो लता
स्मिन्विष्णुं प्रकाशमाना व्यञ्जयन्त्य इव मधुधाराः सहजं प्रेमेति विस्मयं तत्र स्वस्व तत्पत्नीनां मतिर्थेवानन्दश्च ति
भावः एतानि विस्मयकारणानि ८ किंच सस्मितकमलवनेषु विहरतो यदि गोपीगणस्य कृष्णस्य तद्दीप्ति
किं पुनरस्माकमित्याहुः दर्शनीयतिलक इति ९ दर्शनीयस्तिलको यस्य दर्शनीयानां तिलकभूतो वा ति
लक इति वा वनमालायां दिव्यगन्धा तुलसी तस्या मधुना मत्तैरलिकुलैरलघु उच्चैरभीष्टमनुकूलमी

श्री
भा०द०
पू०टी०
१३५

१३५

231

वामे बाहौ तन्मूले वा कृतोऽर्पितो वामकपोलो येन सः वल्गिते नर्तिते भ्रुवौ येन सः वल्गितभ्रूः मुकुन्दः अधरे अर्पित वेणौ कोमलाङ्गुलीभिराश्रिता मार्गाः स्वरच्छिद्राणि येन सः यत्र यदा ईरयति वादयति तदा २ व्योमयानैर्नभसि सिद्धा नां वनिताः सिद्धैः स्वपतिभिः सह वर्तमाना अपि तद्वेणुवस्तु उपधार्य आकर्ण्य प्रथमं विस्मितचित्ताः ततः कामम र्गणेभ्यः समर्पितानि चित्तानि याभिस्ताः पश्चात्सलज्जाः सत्यः कश्मलं मोहं ययुः तत्र लिङ्गमपस्मृ ता नीव्यो याभिरिति अत्रैवंभूतस्य विरहे कथं सहामहे इति सर्वत्र वाक्यशेषः ३ हन्तेति सम्बोधने हे अबलाः इदं

गोप्य ऊचुः वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुं कोमलाङ्गुलिभिराश्रितमार्गं
गोप्य ईरयति यत्र मुकुन्दः व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः काममार्गणसम
र्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ३ हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत्
नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ४ वृन्दशो व्रजवृषा मृगगावो वेणुवाद्यहृतचे
तस आरात् दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ५ ॥

चित्रमाश्चर्यं शृणुत हारहासः हारवद्विशदो हासो यस्य सः यद्वा वेणुवाद्येनाधोवदनेन हसतः हासेऽञ्जत हु हासो यस्य हारवत् शोभमानो वत्सलो हासो यस्य यद्वा हारगणेन हासः स्वविषदा स्फूर्तिर्यस्य सः तस्मिन्नि ति वा उरसि स्थिरविद्युद्विलक्ष्मा यस्य सः यर्हि यदा कूजितवेणुर्भवति तदेति तदा व्रजे ये वृषाः मृगगा वश्च वेणुवाद्येन हृतानि चेतांसि येषां ते आरात् दूरादेव वृन्दैः दष्टाः कवलाः ग्रासाः यैर्धृता उन्नमिताः कर्णाः यैः ते निद्रिताः लिखितचित्रमिवासन् प्रविष्टा इति रक्ष्यामिदमति चित्रमित्यर्थः किंचावेनाम मस्तिन्ततद

सरसीति तर्हि ये सारसा हंसा अन्ये च विहंगाः चारुगीतेन हृतं चेतो येषां ते एत्य आगत्य हरिमुपासत तं भजन्ते तत्समीपे
उपविशन्तीत्यर्थः हन्तेति विषादे मेत्रो मीलितदृशो भवन्तीत्याह सहबलेति ११ भो व्रजदेव्यो गोप्यः सहबलः सरामः स्र
ग्भिर्निर्मिताभ्यामवतंसाभ्यां कर्णभूषणाभ्यां विलासो यस्य यद्वा मनःकाफलस्रगापीडेन विलासो यस्येति
क्षितिभृतः सानुषु गिरितटेषु वर्तमानः स यर्हि जातहर्षो विश्वं हर्षयन् यदा वेणुरवेण उपरम्भति निनादति नादे
नाह्लादयतीत्यर्थः १२ महदिति तदा मेघः महतः श्रीकृष्णस्यातिक्रमेणाशङ्कितं चेतो यस्य सः नगनर

सरसि सारसहंसविहंगाश्चारुगीतहृतचेतस एत्य हरिमुपासत ते यतचित्ता हन्त मीलितदृशो
धृतमौनाः ११ सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः हर्षयन् यर्हि वेणुरवेण
जातहर्ष उपरम्भति विश्वं १२ महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः सुहृदमभ्यव
र्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रं १३ विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा नि
जशिक्षाः तव सुतः सति यदाधरबिम्बे दत्तवेणुरनयत्स्वरजातीः १३ ॥

तो यातीति नोच्चैर्गर्जन् छायया तपात्त्रायते ऽतिप्रपन्नं प्रकाशयो ऊर्ध्वं च्छिति महद्देतदाश्चर्यमित्याह विविधेति १२
हे सति यशोदे तव सुतो नानागोपक्रीडासु निपुणो वेणुवाद्ये विषये निजेव शिक्षा यास्ताः स्वोत्प्रेक्षिता
ति किंतत्तत्रैव स्थितः सन् वेणुरवं च मन्दमन्दं गर्जति किंच सुहृदं विपत्तितृणादिसाम्यात्सखायं कृष्णः
सुमनोभिः रभ्यवर्षत् सुहृष्टैर्देवैः क्रियमाणपुष्पवर्षमेवैकल्प्य छायया च च्छत्रयोगाच्च समतयाकृत्य
तः सप्त वत्वादेवतानूपाभ्यवर्षदिति प्रतापा १२ तत्तन्यतः श्रुता इत्यर्थः स्वरजातिषाद्धभादि स्वराला

पमेदानन्दपदञ्जीतवान् १३ ॥

तत्रतस्य कणितस्य वेणोः रवेण वंचितानि अपहृतानि चित्तानि यासां ताः कृष्णस्य हरिणस्य हरिण्यो गृहि-
ण्यो भार्याः गुणगणार्णं गुणगणार्णसं कृष्णमनुगत्य प्राप्य कृष्णमन्वासत आसत तत्स्थवतीत्यर्थः कु-
तः यतो विमुक्ता गृहाशा याभिस्ताः गोपिका इव यथा गोप्य एवमेवान्वासतेति तदेवं वृंदावनप्रवेशक्रीडित्वा
नद्यालोगोपनान्यपराह्णे यमुनायां क्रीडितं तस्य सौभाग्यमनुवर्णयति कुंदेति १९ गोपीतामत्तसखा
यकुंददाममभिः कृतः कौतुके कौत्सवे नवेषो लंकारो येन सः हे अनघे यशोदे तव वत्सः पुत्रो नंदसूनुः कृष्णः

कणितवेणुरववंचितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः गुणगणार्णमनुगत्य हरिण्यो गोपिका
इव विमुक्तगृहाशाः १८ कुंददामकृतकौतुकवेषो गोपगोधनवृतो यमुनायां नंदसूनुरनघे तव
वत्सो नर्मदः प्रणयिनां विजहार १९ मंदवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन वं-
दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः २० ॥ ॥

यद्वा सहस्रैर्वत्सैः कथं यस्य काश्चिन्नववत्स इति कश्चित्तु नंदनसूनुरिति वा कृष्णः नर्मदः हर्षदः प्रणयिनां
विजहार क्रीडितस्म तदा मलयजस्य चंदनस्य योगेन स्पर्शनं मानयन्निति किंच वंदिनः स्तावकाः सूताः
स्तोत्रकारिभिः प्रीतस्य यः स्पर्शनं तं कृष्णमानयन् अनुकूलं पवनो भवति तथा उपवाति वीजयति यद्वा मल-
यजात् दक्षिणवायुः यद्वा मलयस्य कलेन ये उपदेवगणा गंधर्वादिगणाः वाद्यगीतपुष्पवर्षादिभिः परि-
वव्रुः पर्युपासित आयाति मलो लोको हृष्यस्यः परस्परमन्वभुः २० ॥ ॥

मूत्रपाकलनमूत्रेणाकृत्वपकवज्रावः तद्भयेममूत्रंसृजन्नित्यर्थः पदाश्चतिपन्शत्रलतश्चालयन्ननवस्थि
तेक्षणः चालितनेत्रः कृच्छ्रं कष्टं जगाम अथ निर्ऋतेः क्षयं गृहं निवासं जगाम कृच्छ्रं भवतितथामृतइतिवा
१५ नयनोत्सवः कामेन जनवसेरक्षतेन तातेनाप्यतत्स्मृतं नारदः समरव्यामासकेसेहत्तगिरेवत् ता
दाहश्चरिस्मइति १६ देवदर्शनो देवर्षिः यद्दाकथितं तदेव भविष्यतीति मालादेवदर्शनंयस्यसः श्रीमैने

असृग्वमन्मूत्रशकृत्समुत्सृजन्क्षिपंश्चपादाननवस्थितेक्षणः जगामकृच्छ्रंनिर्ऋतेरथ
क्षयंपुष्पैःकिरन्तोहरिमीडिरेसुराः १५ एवंकुकुद्मिनंहत्वा स्तूयमानः स्वजातिभिः विवेशगो
ष्ठंसबलोगोपीनांनयनोत्सवः १६ अरिष्टेनिहतेगोष्ठेकृष्णेनाद्भुतकर्मणा कंसायाहा
पभगवान्नारदोदेवदर्शनः १७ यशोदायाःसुताकन्यादेवक्याःकृष्णमेवच रामंचरोहिणीपु
त्रंवसुदेवेनबिभ्यता १८ न्यस्तौस्वमित्रेनंदेवैयाभ्यांतेपुरुषाहताः १९ निशम्यतद्भोजपतिः
कोपात्प्रचलितेन्द्रियः निशातमसिमादत्तवसुदेवजिघांसया २० निवारितोनारदेनतत्सुतौ
मृत्युमात्मनः ज्ञात्वालोहमयैःपाशैर्बबंधसहभार्यया २१ ॥ ॥

वनारदेनोक्तमाह १७ यशोदायाः इति देवक्याः कृष्णमत्वेनप्रसिद्धांकन्यां यशोदायाःसुतामाह य
शोदायाःसुतत्वेनप्रसिद्धंकृष्णंदेवक्याःसुतमाह एवमनेन सुतत्वेनप्रसिद्धं राममेव वसुदेवभा
र्यायारोहिण्याःपुत्रमाह वसुदेवस्तौचेत् कथंव्रजंगतौ तत्राह वसुदेवेति १८ निवारितइति
२० हतेवसुदेवेपलायितौ अतोबध्यतामितिमत्वेवदतानारदेननिवारितइति २१ ॥ ॥

समग्रीवोत्पतितेकेशिनमच्युतो भाविकर्मभिः नादेन ततः श्रीरत्नयोमामेमत्यावधीत् हयवेषास्व
रेयदुत्केशिनेहयवेषाणि केसमागात् सर्वेहत्वाकेशवमिवाकरोत् प्रथमश्लोकेनयथवेग्नः केशी
न्यन्नादिनेभगवान्गपाहूयादितितृतीयान्वयः महाहयःसन्महीनिर्जरयन्विदारयन् सटाभिःकेशे
र्व्यभ्रजानि दूतस्ततःविमानानि अभ्राणि विमानानि च तैः संकीर्णं नभः कुर्वन्हेषितैर्भयजातिपाहे

शुकउवाच केशीतुकंसप्रहितःखुरैर्महींमहाहयोनिर्जरयन्मनोजवः सटावधूताभ्र
विमानसंकुलंकुर्वन्नभोहेषितभीषिताखिलः १ विशालनेत्रोविकटास्यकोटरोबृह
द्गलोनीलमहाम्बुदोपमः दुराशयःकंसहितंचिकीर्षुर्व्रजंसनन्दस्यजगामकम्पयन् २
तंत्रासयन्तंभगवान्स्वगोकुलंतद्धेषितैर्वालविघूर्णिताम्बुदं आत्मानमाजौमृगयन्त
मग्रणीरुपाह्वयत्सव्यनदन्मृगेन्द्रवत् ३ सतंनिशाम्याभिमुखोमुखेनखंपिबन्निवा
भ्यद्रवदत्यमर्षणः जघानपद्भ्यामरविन्दलोचनंदुरासदश्चण्डजवोदुरत्ययः ४ ॥

भीषितेअखिलेविश्वेयेनसः १ तद्धेषितैस्तस्यनिर्ह्रादैः हेषितैःवालैःपुच्छलोमभिःविघूर्णिताःपरि
भ्रमिताःअम्बुदायेनतंआजौसंग्रामार्थमात्मानंमृगयन्तंअन्विष्यन्तंअग्रणीरुपाह्वयन्समी
पमाजगामसर्वंकेशीतंनिशाम्यमृगेन्द्रवन्नादमकरोत् ३ ततःसकेशीतंकृष्णंदृष्ट्वामुखेनखंपिबे
न्निवमुखेविस्तार्याभिमुखःसन्अभिमुखेजगाम किंचअन्यमर्षणोऽतिकोपितःअत्यर्थमसहमानोवे

प्रत्यक्पद्भ्यांजघानरणमदः अन्यैरभिभवितुमशक्यःदुरत्ययइत्यतःसन्
दुरत्ययक्रमःअत्रईहितःचेष्टजवः ४ ॥१॥



139

तोमेमृत्योर्नितरांभयहेतोर्वैकुंठमेवाश्रयोयेषांतैः ततःकिंतत्राहघातयिष्यइति ३३ कालकल्पेनमृ
त्युतुल्येनवैद्युतोपमैरशनितुल्यैः ३४ द्रष्टुंवेतितत्तद्वस्वलि ३५ मनीषितंविचारितंसध्र्यक्स्वा

निसृताः किलमेमृत्योर्देवावैकुंठमाश्रयाः तावानयसमंगोपैर्नंदाद्यैःसाभ्युपायनैः ३३ घात
यिष्यइहानीतौकालकल्पेनहस्तिना यदिमुक्तौततोमल्लैर्घातयेवैद्युतोपमैः ३४ तयोर्निह
तयोस्तप्तान्वसुदेवपुरोगमान् तद्बंधून्निहनिष्यामिवृष्णिभोजदशार्हकान् ३५ उग्रसेनंचपि
तरंस्थविरंराज्यकामुकं तद्भ्रातरंदेवकंचयेचान्येविद्विषोमम ३६ ततश्चैषामहीमित्रभवि
त्रीनष्टकंटका जरासंधोममगुरुर्द्विविदोदयितःसखा ३७ शंबरोनरकोबाणोमय्येवकृ
तसौहृदाः तैरहंसुरपक्षीयान्हत्वाभोक्ष्येमहींनृपान् ३८ एतज्ज्ञात्वानयक्षिप्रंरामकृष्णौ
विहार्भकौ धनुर्मखनिरीक्षार्थंद्रष्टुंयदुपुरश्रियं ३९ अक्रूरउवाच राजन्मनीषितंसध्र्यक्
तवस्वावद्यमार्जनं सिद्ध्यसिद्ध्योःसमंकुर्याद्दैवंहिफलसाधनं ४० मनोरथान्करोत्युच्चैर्जनो
दैवहतानपि युज्यतेहर्षशोकाभ्यांतथाप्याज्ञांकरोमिते ४१ एवमादिश्यचाक्रूरंमं
त्रिणश्चविसृज्यसः प्रविवेशगृहंकंसस्तथाक्रूरःस्वमंदिरं ४२ इतिश्रीभागवतेदशम
स्कंधेषट्त्रिंशोऽध्यायः ३६ ॥

वद्यमरणंतन्मार्जकंतथापितावानभिनिवेशोनकार्यइत्यभिप्रायेणाहसिद्ध्यसिद्ध्योरिति ४०
पकारस्यसिद्धिमिच्छाविनामाहमनोरथानिति ४१ इतिश्रीदशमेषट्त्रिंशे ३६ ॥

अयंभावः त्वमीश्वरः भूभारसंहारायावतीर्णोऽसि अतस्त्वद्रूपावर्णैः सविश्वं पालयेति अतस्त्वयि
तावद्रूपाणां केवलत्वमित्याह अप्रमेयात्मन् अपरिच्छिन्नस्वरूप योगेश अचिंत्यप्रभावः जगदीश्वर विश्व
नियन्तः वासुदेव भूतेषु वर्त्तमानः अखिलावास सर्वस्याश्रय सात्वतां पति सात्वतां प्रवर श्रेष्ठ प्रभो सर्वपालि
कथमेवंरूपोऽहमिति चेत्तत्राह त्वमात्मेति ११ तस्मिन्न जीववत्परिच्छिन्नः किंतु सर्वेषां भूतानामन्त
र्यामी नत्वसत्वमात्मा नतु तत्त्वेन दृष्टान्तः एधसां काष्ठानामग्निः ज्योतिरिवेति भूतेषु स्थितोऽपि तैर्न दृश्य
से इत्याह गूढ इति अन्तर्हेतवः गुहाशयः बुद्धेरध्यक्षः किंच साक्षी न हि साक्षी दृश्यत इत्यर्थः अपि

श्रीनारद उवाच कृष्ण कृष्णाप्रमेयात्मन्योगेश जगदीश्वरः वासुदेवाखिलावास सात्वतां
प्रवर प्रभो ॥ ११ त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसां गूढो गुहाशयः साक्षी महापुरुष
ईश्वरः १२ आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान् तैरिदं सत्यसंकल्पः सृजस्यत्स्यव =सू
सीश्वरः १३ स त्वं भूधरभूतानां दैत्यप्रमथरक्षसां अवतीर्णो विनाशाय सेतूनां रक्षणाय च

च महापुरुषः अतः परिच्छिन्नमतिभिर्न दृश्यसे इत्यर्थः तर्हि सर्वोऽत्र त्वं किंप्रमाणमत आह ईश्वरः न
हीश्वरं विना परतंत्राणां जीवानां प्रवृत्तिर्घटत इति भावः अहमीश्वरः अन्यत्सर्वं जीवादि तत्स्वामित्वेन देव
कृतमाह आत्मनात्मनेति साधनान्तरं विना स्वत एव आत्माश्रयः स्वतंत्रः माययाधारान्तराभावात् ससृजे स
सृष्टवान् तैः सत्वादिगुणैरिदं विश्वं सृजसि अवसि पालयसि अत्सि संहरसि ननु सृष्ट्यादिक्रियाः बहुका
रकसाध्या बहुक्लेशा इत्यत आह सत्यसंकल्प इति नहि संकल्पमात्रेण बहिःसाधनापेक्षेति भावः अतस्त्वमी
श्वरोऽस्य संहाराय प्रवृत्तमाह १३ भूधरभूतानां भुवं धारयतीति भूधरा राजानः तद्रूपाणाम् १४ ॥ १४

140

स्वसंस्थयेति चितत्वात्स्वात्मनि नित्यनिवृत्तो मायाकामगुणप्रवाहो यस्मात्तं अतो भगवंतं निरतिशयै
श्वर्यं ईमहि प्रपद्यामहे इति ननु त्रिकालज्ञस्त्वं कथं न तत्प्रपंचं जानासि विवेकज्ञमगुणप्रवाहेऽवी
शिताह २२ ईश्वरमनन्यस्य वशायितारं स्वाश्रयं अन्यस्याविषयं अतः आत्ममाया आत्माधीनमायया
विनिर्मिता अशेषा विशेषा महदादयो यया द्वादिरूपा कल्पना यस्य तं धुर्यं श्रेष्ठं नतोस्मि २४ आत्मैवेके

विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितं स्वतेजसा नित्यनिवृत्तमायया
गुणप्रवाहं भगवंतमीमहि २३ त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताशेषविशेषक
ल्पनं क्रीडार्थमद्यात्तमनुष्यविग्रहं नतोस्मि धुर्यं यदुवृष्णिसात्वतां २४ शुक उवाच एवं
यदुपतिं कृष्णं भागवतप्रवरो मुनिः प्रणिपत्याभ्यनुज्ञातो ययौ तद्दर्शनोत्सवः २५ भगवा
नपि गोविंदो हत्वा केशिनमाहवे पशूनपालयत्पालैः प्रीतैर्व्रजसुखावहः २६ एकदा ते
पशून्पालांश्चारयंतोऽद्रिसानुषु चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः २७ तत्रासन्क
तिचिच्चोराः पालाश्च कतिचिन्नृप मेषायिताश्च तत्रैके विजह्रुरकुतोभयाः २८ मयपुत्रो म
हामायो व्योमो गोपालवेषधृक् मेषायितानपोवाह प्रायश्चोरायितो बहून् २९ गिरिदर्यां
विनिक्षिप्य नीतं नीतं महासुरः शिलया पिदधे द्वारं चतुःपंचावशेषिताः ३० ॥ एवमानंतरं

नारदोक्तमंगीकृत्य पुनस्तथैव पशूंश्चारयतां व्योमो हितः यद्वा व्योमवधः पूर्वमेव हतोऽपि विशेषा
द्विवक्षया समाहृत्य चोच्यते अतस्तिरःश्लोकं केचित्पठंति एवं हंस्वधा सर्वमेव पठंति तन्माहुरेकदेति २६
मेषवदाचरितान् चोरवदाचरितः सन् अपोवाह अपकृष्यानिनाय २९ पिदधे आच्छादितवान्

गतं घोऽहनिष्येव श्रहरपष्यति स्वोपस्त्रोमदुरंगनाक्षिपस्य: चाणूरादीन्‌ त्वयानिहताइत्यामीतिति
दुर्लनिर्देशोविस्तापनप्रकारविशेष: १६ तस्यानुतदनन्तरंशोवादीनां शंख: पंचजन: वेधेइत्यामीतिणे
भाविनिर्देशमात्रमेतत्तत्वांतरविवर्ति १७ भार्यायाजांबवत्यामहस्वधामन: सहाकालहूपान्‌ १८ हम
कायोचसन्कर्त्तीकरिष्यामि २० श्रमण्यविप्रस्यभूभारस्यचयवेविप्रहृतामिनेदनेश्रीभगवतानमेत्य

दिष्यातेनिहतौदैत्योलीलयायंहयाकृति: यस्यहेषितसंत्रस्ताम्त्यजोन्त्यनिमिषादिवे १५ चा
णूरंमुष्टिकंचैवमल्लानन्यांश्रहस्तिपान्‌ कंसंचनिहतंद्रक्ष्यपरश्रोऽहनित्तेप्रभो १६ तस्यानुशं
खयवनमुराणांनरकस्यच पारिजातस्यहरणमिंद्रस्यचपराजयं १७ उद्वाहंवीरकन्यानांवी
र्यशुल्कादिलक्षणं नृगस्यमोक्षणंशापात्द्वारकायांजगत्पते १८ स्यमंतकस्यहरणंसादान
सहभार्यया मृतपुत्रप्रदानंचब्राह्मणस्यस्वधामत: १९ पौंड्रकस्यवधोपश्चात्काशिपुर्याश्चदीपनं
नेतवक्रस्यनिधनंचैद्यस्यचमहाक्रतौ २० यानिचान्यानिवीर्याणिद्वारकायामुसन्भवान्‌ कर्त्ता
इत्याम्यहंतानिगेयानिकविभिर्भुवि २१ श्रथतेकालरूपस्यक्षपयिष्णोरमुष्यवै अक्षौहिणीनां
निधनंद्रक्ष्यामर्जुनसारथे: २२ ॥

निहयेन २१ विशुद्धविज्ञानघनंकेवलमनेकमूर्त्तिप्रतएवस्वसंस्थापासवरूपस्यसम्यक्सिद्धिर्येवपरमा
नंदरूपयासमस्तगामा: स्वैश्वर्येणयेनतंप्रामेकामततोकामंत्यमेकल्पनामाहश्रमोघवांछितमिति न
नुतोवरूत्वाचेदस्मिनर्हितनुतिंवाराकेनत्त्रति: प्रतत्राह २२ ॥ ॥

श्री॰
भा॰ द॰
टी॰
२४३

143

ननु सर्वधर्माद्धेर्कारादिरहितस्यात्मारामस्य लीलामपि कुतः इत्याशङ्क्याह यदा तद्ग्रहणार्थं तत्प्राप्त्येनाह
अखिलानि अमीवानि पापानि घ्नन्ति हरन्तीति अखिलामीवहानि तैः तथा सुमङ्गलैः गुणा
भगवतो लीला नित्या गुणाः कर्मणादयः कर्माणि जन्मानि च तैर्विमिश्रा युक्ता वाचः जगत्प्राण
न्ति जीवयन्ति ये च तद्विरहिताः ताः स्वलङ्कृताः अपि शवस्य मलेकृता वत्
कवत्शोभनाः सतां सम्मताः १२ स्वधर्मविनान्येन वर्णाश्रमान्पालयता मम सवयोणां स्वसकर्ताम

यस्याखिलामीवहभिः सुमङ्गलैर्वाचो विमिश्रा गुणकर्मजन्मभिः प्राणन्ति शुम्भन्ति पुनन्ति वै
जगत्यास्तद्विरक्ताः शवशोभना मताः १२ स चावतीर्णः किल सात्वतान्वये स्वसेतुपालामरव
र्यशर्मकृत् यशो वितन्वन्व्रज आस्त ईश्वरो गायन्ति देवा यदशेषमङ्गलम् १३ तं त्वद्य नूनं
महतां गतिं गुरुं त्रैलोक्यकान्तं दृशिमन्महोत्सवम् रूपं दधानं श्रिय ईप्सितास्पदं द्रक्ष्ये ममासन्नु
षसः सुदर्शनाः १४ अथावरूढः सपदीशयो रथात्प्रधानपुंसोश्चरणं स्वलब्धये धिया धृतं
योगिभिरप्यहं ध्रुवं नमस्य आभ्यां च सखीन्वनौकसः १५ ॥

न्ववतीर्णः १३ त्रैलोक्ये एकः कान्तः दृशिर्दृष्टिस्तस्य हि नो मनोहरं अत एव श्रियः ईप्सितमास्पदं एवंभू
तं नूपं द्रक्ष्यामीति यथा तत्तदर्शनेनाहं द्रक्ष्यामीति अत्र लिङ्गव्यत्ययः प्रभातास्तस्य मयाः सुदर्शनाः सुप्रभाता
तेजस्याभ्यवकाशः अभूवन्नित्यर्थः १४ किंच अस्यानन्तरं सपदि तत्क्षणमेव वा रथादवतीर्णः स
न् प्रधानयोः पुरुषयोः रामकृष्णयोश्चरणं योगिभिरप्यात्मलाभाय केवले धियैव धृतं साक्षाद्दृढं ना
मस्यामीति आभ्यां सहान्यांश्च सखीन् गोपांश्चेति नमस्यामीति किंचापीति १५ ॥ ॥ ॥

अखिलैर्लोकपालैः किरीटैर्जुष्टोऽमलः पादरेणुर्यस्य तस्य क्षितिकौतुकानि क्षितेरलंकारभूतानि २५ तद्दर्श-
नेन य आह्लादः तेन विवृद्धः संभ्रमो यस्य सः प्रेम्णा ऊर्ध्वानि रोमाणि यस्य सः अश्रूणां कलाभिर्लवैराकुले ईक्षणे यस्य
सः रथादवस्कन्द्य अवप्लुत्य तेषु पदेष्वचेष्टत व्यलुठत् अहो इति महाप्रभोः नारायणस्य अमूनि अङ्घ्रिरजांसीति ज्ञात्वा
भक्तो भावयन् ननु किमर्थमेवं व्यलुठत् नास्ति प्रेमसंभ्रमे फलोद्देशः इत्याह देहभृतामिति २६ देहभृतामेता-

पदानि तस्याखिललोकपालकिरीटजुष्टामलपादरेणोः ददर्श गोष्ठे क्षितिकौतुकानि विलक्षिता-
न्यब्जयवाङ्कुशाद्यैः २५ तद्दर्शनाह्लादविवृद्धसंभ्रमः प्रेम्णोर्ध्वरोमाश्रुकलाकुलेक्षणः रथादव-
स्कन्द्य स तेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इति २६ देहंभृतामियानर्थो हित्वा दंभं भयं शुचं सं-
देशाद्यो हरेर्लिंगदर्शनश्रवणादिभिः २७ ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ नीलपीताम्बरध-
रौ शरदम्बुरुहेक्षणौ २८ किशोरौ श्यामलश्वेतौ श्रीनिकेतौ बृहद्भुजौ सुमुखौ सुन्दरवरौ बाल-
द्विरदविक्रमौ २९ ध्वजवज्राङ्कुशाम्भोजैश्चिह्नितैरङ्घ्रिभिर्व्रजं शोभयन्तौ महात्मानौ सानुक्रोशा-
स्मितेक्षणौ ३० उदाररुचिरक्रीडौ स्रग्विणौ वनमालिनौ पुण्यगन्धानुलिप्ताङ्गौ स्नातौ विरजवा-
ससौ ३१ ॥

वानेव पुरुषार्थः कंसस्य संदेशात् प्रारभ्य हरेर्लिंगश्रवणदर्शनादिभिर्योयमक्रूरस्य वृत्तिरिति संदे-
शः आदौ यस्यार्थस्य सः एतावानक्रूरस्य जात इति वा २७ ततः कृष्णं रामं च ददर्श गावो दुह्यन्ते यस्मिन्नि-
ति गोदोहनं तत्स्थानं गतौ आश्रमौ २८ सानुक्रोशेणानुकम्पाहितभासितेन स्मितयुक्ते ईक्षणे ययोः ३०
उदाराः रुचिराश्च क्रीडाश्चेष्टा ययोस्तौ स्रग्विणौ रत्नस्रग्भिरलंकृतौ ३१ ॥

तेषामपि किमनमीवमुपद्रवस्त्वमितियावत् ३ अनामयमारोग्यं ४ एवं प्रश्नोपि समनातिसेवात्
इत्याह किंन्विति हे अंग हे अक्रूर एधमाने अस्माकं न कुलस्यामये रोगे तो मातुल इति नाम यस्य तस्मि
न्सति स्वानां ज्ञातीनां तत्प्रजासु च ५ अहो अस्मन्निमित्तमित्याह तिनेडः से आर्ययोः पित्रोरुपराधयोः यद्धेतोर्यद्रा
हमेव हेतुस्तस्मात् हे सौम्य स्वानां वा दर्शनं अद्य मम संजातं दिष्ट्या भद्रं भद्रं ७ माधवः ममोक्तपाजोक्तं

सायंतनाशनं कृत्वा भगवान्देवकीसुतः सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितं ३ श्री
भगवानुवाच तात सौम्यागतः कच्चित्स्वागतं भद्रमस्तु वः अपि स्वज्ञातिबंधूनामनमीवम
नामयं ४ किं नु नः कुशलं पृच्छे एधमाने कुलामये कंसे मातुलनाम्नांग स्वानां नस्तत्प्रजासु
च ५ अहो अस्मदभूद्भूरि पित्रोर्वृजिनमार्ययोः यद्धेतोः पुत्रमरणं यद्धेतोर्बंधनं तयोः ६ दि
ष्ट्याद्य दर्शनं स्वानां मह्यं वः सौम्य कांक्षितं संजातं वर्ण्यतां तात तवागमनकारणं ७ शुक उ
वाच पृष्टो भगवता सर्वं वर्णयामास माधवः वैरानुबंधं यदुषु वसुदेववधोद्यमं ८ यत्सं
देशो यदर्थं वा दूतः संप्रेषितः स्वयं यदुक्तं नारदेनास्य स्वजन्मानकदुंदुभेः ९ श्रुत्वाक्रूरव
चः कृष्णो बलश्च परवीरहा प्रहस्य नंदं पितरं राज्ञा दिष्टं विजज्ञतुः १० गोपान्समादिश
त्सोपि गृह्यतां सर्वगोरसः उपायनानि गृह्णीध्वं युज्यंतां शकटानि च ११ ॥

८ योसंदेशोऽस्य यदर्थं चागमनं यदि भिवोक्तं नारदेनास्य कृष्णस्य स्वजन्म कंसस्य जन्म आ
नकदुंदुभेः सकाशात् ९ विजज्ञतुर्विशेषेण ज्ञापयामासतुः १० सोपि नंदः गोपान्समादिशत् ता
न्देव दर्शयति गृह्यतामित्यादिना गोरसः क्षीरादि उपायनान्युपायनार्थं ११ ॥



146

सम्प्रतिसमानिरनुग्रहेहस्तेकपंकेनप्रकारेणजीवेयेत्यर्थः सोनःपशुचातीमपक्यालकोयेषामवीनांमे
पाणानपवनतस्यास्त्यर्थः निरनुग्रहत्तामेवाह योवधीदितिलोकान्तोकानिग्रस्ततग्रतिपादः अमा
हृत्वनर्पयतियः अतःखलःतस्यकेमस्पप्रजानांहे अक्रूरवेयोजीवनमात्रमपिदुर्लभंतेषांवःकिंकृपाले
विचारयामीति मधुरयावाचापवेसक्तनःतपवद्वाचोपरिहृष्टेनप्रश्नेनश्रधपरिश्रमंसमारपरिश्रमं ४

निवेद्यमोचातिपथेसेवाहव्रातमाहतः अत्रैवकृगणेमेध्यंब्रह्मयोपाहरद्विभुः ३४ तस्मैभु
क्तवतेप्रीत्यारामःपरमधर्मवित् मखवासैर्गन्धमाल्यैःपरांप्रीतिंव्यधात्पुनः ४० पप्रच्छमत्क
तेनंदःकथंस्थनिरनुग्रहे कंसेजीवतिदाशार्हसौनपालाइवावयः ४१ योवधीत्स्वस्वसृतो
कान्कोशंत्यादीनदीनवत् किंनुस्वित्तत्प्रजानांवःकुशलंविमृशामहे ४२ इत्थंसूनृतया
वाचानंदेनसुसभाजितः अक्रूरःपरिपृष्टेनजहावध्वपरिश्रमं ४३ इतिश्रीभागवतेदश
मस्कंधेअक्रूरव्रजगमनेनामअष्टात्रिंशः ३८ श्रीशुकउवाच सुखोपविष्टःपर्यंकेरामकृ
ष्णोरुमानितः लेभेमनोरथान्सर्वान्पथियान्सचकारह १ किमलभ्यंभगवतिप्रसन्नेश्रीः
निकेतने तथापितत्परराजन्नहिवाञ्छतिकिंचन २ ॥ ॥

इतिश्रीभावार्थदीपिकायांअष्टत्रिंशः ३८ नवत्रिंशेपुरीगच्छत्यच्युतेनोविलोक्य अक्रूरेणाप्यकालिन्द्यांवि
ष्णुलोकस्यदर्शनं भक्तमनोरथाःसर्वाभवंतीतिद्योतयन्नाह सुखोपविष्टइतिद्वाभ्यांसत्कृत्यामुपविकोमा
सो निनः १ हेनातमोम्पंगतेनतथाभवतितथागतःस्वात्मातिवेधनोस्वेषहृदः नान्यार्थःसर्वपिंड
वेणनकामपिरसंवेरि २॥ ॥

श्री० भा०द० टी० १४५

ब्रह्मवेदं जपन्नक्रूरो बालौ कृष्णौ तौ मलाविति पाठे किन्तु चेत्तसेतेऽक्रूराय जले रूपमात्मीयं दर्शयत् ४२ सि
द्धादिभिः स्तूयमानं सहस्रशिरसं मस्तकं यस्य तं सहस्रफणा मौलयो यस्य सेतुनीतिं तथा तं नीलं अंबरं यस्य तं वि
सवत्कमलनालवत् धवलैः श्वेतं कैलासमिव स्थितं ४४ तस्योत्संगे क्रोडे लोके नेदहार्थे विलोक्यत्येकाद

149 निमज्ज्य तस्मिन् सलिले जपन् ब्रह्म सनातनं तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ ४१ तौ र
थस्थौ कथमिह सुतावानकदुन्दुभेः तर्हि स्वित् स्यन्दने न स्त इत्युन्मज्ज्य व्यचष्ट सः ४२ तत्रापि च य
थापूर्वमासीनौ पुनरेव सः न्यमज्जद्दर्शनं यन्मे मृषा किं सलिले तयोः भूयस्तत्रापि सोऽद्राक्षीत्
स्तूयमानमहीश्वरं सिद्धचारणगन्धर्वैरसुरैर्नतकन्धरैः ४४ सहस्रशिरसं देवं सहस्रफणमौ
लिनं नीलाम्बरं विसश्वेतं शृङ्गैः श्वेतमिव स्थितं ४५ तस्योत्सङ्गे घनश्यामं पीतकौशेयवास
सं पुरुषं चतुर्भुजं शान्तं पद्मपत्रारुणेक्षणं ४६ चारुप्रसन्नवदनं चारुहासनिरीक्षणं सुभ्रून्न
सं चारुकर्णं सुकपोलारुणाधरं ४७ प्रलम्बपीवरभुजं तुङ्गांसोरःस्थलश्रियं कम्बुकण्ठं निम्ना
भिं वलिमत्पल्लवोदरं ४८ ॥

शोतन्नोकेनान्वयः ४६ शोभने भ्रुवौ यस्य उन्नता नासिका यस्य तं चारू कर्णौ च शोभमानौ कपोलौ यस्य अरुणौ
अधरौ च यस्य तं चाति ४७ तुंगांसौ सोयस्य उरःस्थले श्रीर्लक्ष्मीर्यस्य तं च तं च वलिवत्पल्लवोदरं वलयति
र्यक्तास्त्रिनिम्ना नाभिर्यस्य स तं तद्वत् वलिवत् तद्वत् तस्य पल्लववत् अश्वत्थदलसदृशं उदरं यस्य तं ४८ ॥

कृष्णविषक्तानि मानसानि यासां ताः सुस्वरमुच्चैः क्रूरमक्रूरतः कृत्वा केशिकंसनिसूदनः गोपीमनो-
रथारामः रमारामः स्वपुरं ययौ ३२ स्त्रीणामिति अनादृत्य कृते मैत्रादिके मैत्र्योपासने तदादिकं ये-
न सः ३३ अनुसज्जन्त अनुगच्छन् अनुरञ्जिताः प्रत्याहृत्य निरीक्षणादिभिः किंचिदनवीक्षिताः

शुक उवाच एवं ब्रुवाणा विरहातुरा भृशं व्रजस्त्रियः कृष्णविषक्तमानसाः विसृज्य लज्जां रुरु-
दुः स्म सुस्वरं गोविन्द दामोदर माधवेति ३२ स्त्रीणामेवं रुदतीनामुदिते सवितर्यथ अ-
क्रूरश्चोदयामास कृतमैत्रादिको रथं ३३ गोपास्तमन्वसज्जन्त नन्दाद्याः शकटैस्ततः आ-
दायोपायनं भूरि कुम्भान् गोरससम्भृतान् ३४ गोप्यश्च दयितं कृष्णमनुव्रज्यानुरञ्जिताः
प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे ३५ तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदू-
त्तमः सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः ३६ यावदावीक्ष्यते केतुर्यावद्रे-
णू रथस्य च अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिरे ३७ ता निराशा निववृतुर्गो-
विंदविनिवर्तने विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितं ३८ भगवानपि संप्राप्तो रामा-
क्रूरयुतो नृप रथेन वायुवेगेन कालिंदीमघनाशिनीं ३९ तत्रोपस्पृश्य पानीयं पीत्वा
मृष्टं मणिप्रभं वृक्षषण्डमुपव्रज्य सरामो रथमाविशत् अक्रूरस्तावुपामन्त्र्य निवेश्य च

प्रत्यादेशं सन्देशं याते ३५ तप्यतीस्तप्यमानाः आयास्ये पुनरागमिष्यामीति दूतवाक्यैः ३६ कृष्णम-
नुप्रस्थापितात्मानः अनुप्रेषितचित्ताः लेख्यानि चित्रपुत्रिकास्तद्वन्निश्चलाः ३७ वृक्षाणां षण्डं समूहमुपव्रज्य

श्री° भा° द° पु° टी° १५°

अस्मत्कृष्णोऽसावेवंभूतःपरमैश्वर्यमितितात्वेति ५९ इतिश्रीभा°टी°दशमस्कंधेएकोनचत्वारिंशः चत्वा
रिंशेततोऽक्रूरःकृष्णमेवपरेश्वरं प्रणम्यभक्त्यास्तुत्यावसगुणागुणाभेदतःश्रीकृष्णंप्रणमतिनतोऽस्मीतिदे
श्यंततोक्तस्मिन्ननतोस्मित्वमस्मात्विलक्ष्यःजतोमोवालीननतोस्मितत्राहआद्यंपुराणंअव्ययंच अनादिनिधन

विलोक्यसुभृशंप्रीतोभक्त्यापरमयायुतः हृष्यत्तनूरुहोभावपरिक्लिन्नात्मलोचनः ५६ गि
रागद्गदयास्तौषीत्सत्त्वमालम्ब्यसात्वतः प्रणम्यमूर्ध्नावहितःकृतांजलिपुटःशनैः ५७ इति
श्रीभागवतेदशमस्कंधेएकोनचत्वारिंशः अक्रूरउवाच नतोस्म्यहंत्वाखिलहेतुहेतुंनारायणं
पूरुषमाद्यमव्ययं यन्नाभिजातादरविंदकोशाद्ब्रह्माविरासीद्यतएषलोकः १ भूस्तोयम
ग्निःपवनःखमादिर्महानजादिर्मनइंद्रियाणि सर्वेंद्रियार्थाविबुधाश्चसर्वेयेहेतवस्तेजगतों
गभूताः २ ॥ ॥

250

मित्यर्थःकृतपततत्अखिलहेतुनांहेतुं श्रीनारायणोनाहमितिचेन्नाहनारायणस्त्वंकिंनारायणाः
तिमास्तोधिकात्वत्तति मत्यमेवत्याह यन्नाभिजातादितियतोब्रह्मणः १ अखिलहेतुत्वंप्रपंचयति
भूरितिखमादिरहंकारः अजामायाःतस्याआदिःपुरुषःएतेयेजगतोहेतवःतेसर्वेतवांगभूताश्चेगात्तर

श्रीमद्भागवतमहापुराणस्य ४ ॥ ॥

१५°

कलितं तदेव शोणिमा शुक्रकरभसदृशोरूद्वयं यस्य सूक्ष्मतनकदितद्‌शोणिमाभ्यां करभोरुद्वयेन चान्वितं ४९ तुं
गावेपादत्रतो गुल्फौ अरुणानखाव्रातस्तैर्दीधितिभिः तत्पानवाः कोमलाश्चेशल्यस्पृष्टचत्तांग्रेयदद
लानि तैः सुविलसत्शोभमाने पादपंकजयस्य श्रीकृष्णस्य तं च श्रीकृष्णं ५० महार्हमणिगणान्वितैः
नैः किरीटादिभिः स्पृष्टकान्त्यभावो भिप्रायो येषां तैः तत्रपार्षदैः स्वामीति स्तूयमानं सनकादिभिः

स्फुरत्कदितनत्शोणिकरभोरुद्वयान्वितं चारुजानुयुगं चारुजंघायुगलसंयुतं ४९ तुंगगुल्फा
रुणानखव्रातदीधितिभिर्हतं नवांगुल्यंगुष्ठदलैर्विलसत्पादपंकजं ५० सुमहार्हमणिव्रा
तकिरीटकटकांगदैः कटिसूत्राग्रहारनूपुरकुंडलैः ५१ भ्राजमानं पद्मकरं पाञ्चजन्य
द्वापरं श्रीवत्सवक्षःसंभ्राजत्कौस्तुभं वनमालिनं ५२ सुनंदनंदप्रमुखैः पार्षदैः सनकादिभिः सु
रेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ५३ प्रह्लादनारदवसुप्रमुखैर्भागवतोत्तमैः स्तूयमानं पृथ
ग्भावैर्वचोभिरमलात्मभिः ५४ श्रियापुष्ट्या गिरा कांत्या कीर्त्या तुष्ट्येलयोर्जया विद्ययाविद्य
या शक्त्या मायया च निषेवितं ५५ ॥ ॥

ब्रह्मेति ब्रह्माद्यैर्महेश्वरः इति मरीच्यादिभिर्द्विजोत्तमैः परः प्रजापतिरिति ५३ प्रह्लादनारदवसवप्रमुखै
र्येषां तैः परदेवतमिति च श्रेष्ठैर्वचोभिः पृथग्भावैर्वचोभिरितिवा ५४ विद्याविद्ये जीवानां मुक्तिसंसृति
हेतू माया तयोः कारणं शक्तिः ह्लादिनी संवित् तत्ताभिरन्याभिश्च निषेवितं
५५ ॥ ॥ ॥

त्रय्या च विद्यया केचित्त्वां वै यजंते नन्विंद्रवरुणादीन्यजंते न तु मामित्यत आह नानाचअ्रह्।
स्वादीनि रूपाणि येषां तेषामाख्यया त्वामेव यजंते इति अयं भावः इंद्रवरुणादिमूर्त्तैः इंद्रादयः सर्वे सूर्य
णप्रकाशयतेन च सर्वे स्याबहवः संति अतो नामभेदेन त्वामेव यजंते इति तथा च श्रुतिः स प्रथमः स प्रह्व
तिः विश्वकर्मा स प्रथमो मित्रावरुणाग्निः स प्रथमो बृहस्पतिः चिकित्वांस्तस्मा इंद्राय हविराजुहोतीति ५
ज्ञानयज्ञेन समाधिना ६ सांख्ययोगत्रयीमार्गाः ज्ञात्वैवं सर्वथा व मार्गा वा हेतुयेन अन्ये चेति संस्कृतात्मा।

त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः। यजंते विततैर्यज्ञैर्नानारूपामराख्यया ५ एके
त्वाखिलकर्माणि संन्यस्योपशमं गताः। ज्ञानिनो ज्ञानयज्ञेन यजंति ज्ञानविग्रहम् ६ अन्ये च
संस्कृतात्मानो विधिनाभिहितेन ते। यजंति त्वन्मयास्त्वां वै बहुमूर्त्त्येकमूर्त्तिकं ७ त्वामेवा
न्ये शिवोक्तेन मार्गेण शिवरूपिणं। बह्वाचार्यविभेदेन भगवन्तमुपासते ८ सर्व एव यजंति
त्वां सर्वदेवमयेश्वरं। येप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ९ ॥ ॥

नाः वैष्णवदीक्षिताः संतः ते त्वयाभिहितेन पंचरात्रादिविधिना त्वन्मया त्वन्मयत्वेनात्मानं चिंतये
नः त्वदेकपरा वा इति वा वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेन चतुर्मूर्त्तिं श्रीनारायणरूपेणैकमूर्त्तिकं त्वामे
व यजंति ७ बह्वाचार्यभेदेनेति नानाशैववैष्णवमार्त्तादिमार्गभेदेन ८ येपि त्विंद्रदेवताभक्तास्तेपि त्वामे
व यजंतीत्याह सर्व एवेति हे सर्वदेवमय यतस्त्वत्ते परस्परदेवताधिक्ये पकलहव्याकुलचित्ताः कथमेकमे
व यजंत इत्युच्यते नन्वाद्यप्यन्यधिय इति बुद्धिमात्रभेदो न वस्तुभेद इत्यर्थः ९ ॥ ॥ १५१

151

ननु स्तुतिः कथं क्रियते अहमेव अन्य उत्पन्नः तत्परं तं चेति चेद्धित्याशंक्य तन्नैव मायायास्त्वत्परमा
र्थं तत्त्वं न कोऽपि वेत्त्याह नैतदिति एते अजादयः अजो ब्रह्म आदिर्येषां ते आत्मनस्ते स्वरूपं न विदुः अना
त्मत्वतया तत्पनेन कारणेन जडत्वे हेतुः गृहीतः प्रत्यक्षादिभिर्दृष्टः तर्हि अजडो दृग्गोचर इति भावः ननु अजडा
नो भजन्ते जीवत्वस्वतास्यतीत्यत आह अजड इति अजो ब्रह्मापि अजाया गुणा अनुबद्धः आकृतः आकारीकृ
तः गुणातीतः स्वरूपेन वेद अन्यः कृतो नास्तीति यद्वा प्रकृत्यादयः आत्मनः स्वरूपत्वं स्वरूपेन वि
दुः जडत्वादेव जीवस्तु नात्मा आत्मानं च वेत्ति न तत्त्वस्वरूपमिति यथोक्तं हेमगुप्ते देहो सर्वो त्वा मन वाम

नैतत्स्वरूपं विदुरात्मनस्ते ह्यजादयो नात्मतया गृहीताः । अजोऽनुबद्धः स गुणैरजाया गुणात्परं वे
द न ते स्वरूपं ३ त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरं साध्यात्ममाधिभूतं च साधिदैवं
साधवः ४ ॥ ॥

त मात्रा नात्मानमन्यो च विदुः परे यत् सर्वेषु गुणान्वेद गुणेभ्यस्ततो न वेद सर्वज्ञमनन्तमीशे ३ ननु यदि
केऽपि न जानन्ति कथं तर्हि संसारनिवृत्तिः जीवानामित्याशंक्य मातादृशो वा त्वेपि येन केनापि मार्गे
ण भजन्तो वा गम्योऽसीत्याह त्वां योगिन इति हिरण्यगर्भाद्यां ध्यात्मा अधिभूताधिदैव माता महापुरुषं त
देतयोमित्स्वरूपं ईश्वरं च यजन्ति तदेवं साङ्ख्ययोगावेकीकृत्योक्तो त्रयीमार्गं कर्मतानन्मेदेन दर्श
यति त्रय्या चेति श्लोकद्वयेन वैतानिकाः कर्मयोगिनः त्वां वै ४ ॥ ॥

तदेवमहन्त्वांनमाम्यथैवेति तस्मात् जलादुद्भवैनीतितद्भवानित्यगुणावीतितैः नत्वामायायाध्यंत्वामहंहितापं
यास्तु वोदेहाद्यभिमुखो वर्तते इति २४ नन्वेवं जानन्तः कुतो विषयाभिमुखा वर्तन्ते तत्राह नोत्सहे इति करणाविषया
सनागुणात्मीयस्य सः अतएव कामकर्मभ्यां हृतं तद्भिन्नं इन्द्रियैर्वृत्तिभिर्विषयसंयुक्तैः इतस्ततः आकृष्यमा
णमेतरोद्धुं नियन्तुं नपारयामीति २५ तदेवमहं तवेतीयः सोहं तवाङ्घ्रिमुपगतः शरणागमः नन्विन्द्रियपरतंत्र
स्यैवतदपि कुतः तत्राह तत्त्वपादीति हे ईश पादमूलं त्वयैव मिलितं अन्यस्त्वपरमगमनं चासतो दुरापं अतो भवतोऽनुग्रहस्य
वेत्यहं मन्ये अनुग्रहे सतीति वा ननु सतामेव यद्भवति किमद्युग्रहणान्यत्तत्राह पुंस इति जीवस्य संसा

यथाबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः अभ्येति मृगतृष्णां वै तद्वत्त्वाहं पराङ्मुखः २६ नोत्सहेहं कृप
णधीः कामकर्महतं मनः रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः २७ सोहं तवाङ्घ्र्युपगतोस्म्य
सतां दुरापं तच्चाप्यहं भवदनुग्रह ईश मन्ये पुंसो भवेद्यर्हि संसरणापवर्गः त्वय्यब्जनाभ सदुपासना
या मतिः स्यात् २८ नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये २९

रस्यापवर्गः समाप्तिः यदा त्वद्रूपया भवेत्स भावनास्पदं भवति हे अब्जनाभ तदा सत्सूपासनया सेव्यते तये
व तव मतिर्भवेत् सकर्मफलभागे त्वया पाविना सत्सेवा नितिशोत्वन्मतिः तितमामुक्तिरित्यर्थः २८ यादा
योःयतस्माद्गृह्यते हृद्येन न मर्त्यतिविज्ञानमेव मात्रा मूर्तिर्यस्य तस्मै अतएव सर्वप्रत्ययहेतवे समस्तज्ञान
कारणाय किंच पुरुषेशप्रधानाय पुरुषस्येशः स्वयं प्रापकाः कालकर्मस्वभावादयः तेषां प्रधा
नाय नियन्त्रे कुतः ब्रह्मणे परिपूर्णाय किंच अनन्तशक्तये अनन्ताः शक्तयो यस्य यद्वा अनन्ता मायाख्या
शक्तिः यस्य तस्मै अथवा प्रधानप्रकृतिः पुरुषः तत्प्रवर्तकः ईशः कालः एतत्त्रितयात्मने ब्रह्मणे वदन्ति
भगवान् प्रकृतिः ईशोपादानमाधारः पुरुषः परः सतोभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहमिति २९ ॥

अतःस्वयमवतारान्नमस्यति नमइति हयशीर्ष्णे हयग्रीवाय मधुकैटभयोर्मृत्यवे हन्त्रे १७ संकर्षणादि
मे चतुर्व्यूहरूपेणप्रणमति नमस्तइति २१ एवंस्तुत्वाबंधमोक्षंप्रार्थयितुमाह भगवन्निति असदिति दे
हादौग्रहः आग्रहोयस्यसः असद्ग्राहोयस्येतिच २३ नकेवलमयंलोकः अहमपितथैवेत्याह अहंचेति

नमःकारणमत्स्याय प्रलयाब्धिचराय च हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे १७ अकूपा
राय बृहते नमो मन्दरधारिणे क्षित्युद्धारविहाराय नमः सूकरमूर्तये १८ नमस्तेऽद्भुतसिंहाय
साधुलोकभयापह वामनाय नमस्तुभ्यं क्रान्तत्रिभुवनाय च १९ नमो भृगूणां पतये दृप्तक्षत्रव
नच्छिदे नमस्ते रघुवर्याय रावणान्तकराय च २० नमस्ते वासुदेवाय नमः संकर्षणाय च प्र
द्युम्नायानिरुद्धाय सात्वतां पतये नमः २१ नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने म्लेच्छप्रा
यक्षत्रहन्त्रे नमस्ते कल्किरूपिणे २२ भगवन्जीवलोकोऽयं मोहितस्तव मायया अहंममेत्यस
द्ग्राहो भ्राम्यते कर्मवर्त्मसु २३ अहं चात्मात्मजागारदारार्थस्वजनादिषु भ्रमामि स्वप्नक
ल्पेषु मूढः सत्यधिया विभो २४ अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम् द्वन्द्वारामस्तमो
विष्टो न जाने त्वात्मनः प्रियम् २५ ॥ ॥

२४ स्वप्नकल्पत्वमेवप्रकटयति विपर्ययमतिरिति अनित्येकर्मफले नित्यमिति अनात्मनि देहे आत्मे
ति दुःखरूपे गृहादौ सुखमिति विपरीतमतिरित्यर्थः द्वन्द्वेषु सुखदुःखादिषु आरामयति क्रीडतीति
तथा सः ननु दुःखेकथं रतिस्तत्वेत्यत आह तमोविष्टः तमसाव्याप्तः अत आत्मनः प्रियं श्रीमास्यदं त्वां नो

॥ २५ ॥

श्री भा॰द॰ पू॰टी॰ १५४

254

हस्तिनं श्रुद्धुः पर्यपतः पर्यवस्थिता इत्यर्थः ७ श्रीरामकृष्णागमनं प्रतीक्षमाणाः स्थिताः ८ अभ्रितं विनीतं
९ स्वगृहं प्रविशतां स्वबन्धुच्युतां यविश्रम्येत्यर्थः १० सानुजः सहगोपालैरित्यर्थः १२ यत्पादोदकेन यस्य

स्त्वक्रो चोदयामास स्यन्दनं गान्दिनीसुत मथुरां मथुरां यत्रामे कृष्णश्चैव दिनात्यये ६ मार्गे ग्रामज
ना राजेस्तत्र तत्र उपसंगताः वासुदेवसुतौ वीक्ष्य प्रीता हस्तिनं चादधुः ७ तावद्व्रजौकसस्तत्र
नन्दगोपादयोऽग्रतः पुरोपवनमासाद्य प्रतीक्षन्तो वनस्थिताः ८ तान्समेत्याह भगवानक्रूरं
जगदीश्वरः गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ९ भवान्प्रविशतामग्रे सहयानः पुरीं गृहं
वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीं १० अक्रूर उवाच नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो
त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ११ आगच्छ याम गेहान्नः सनाथान्कुर्वधोक्षज सहाग्र
जः सगोपालैः सुहृद्भिश्च सुहृत्तम १२ पुनीहि पादरजसा गृहान्नो गृहमेधिनां यच्छौचेनानुतृप्य
न्ति पितरः साग्नयः सुराः १३ अवनिज्याङ्घ्रियुगलमासीत्श्लोक्यो बलिर्महान् ऐश्वर्यमतुलं लेभे
गतिं चैकान्तिनां तु या १४ आपस्तेऽङ्घ्र्यवनेजन्यस्त्रीँल्लोकान्शुचयोऽपुनन् शिरसाधत्त याः श
र्वः स्वर्याताः सगरात्मजाः १५ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन यदूत्तमोत्तमश्लोक नारा
यण नमोऽस्तु ते १६ ॥

गृहागमनस्थितेन १३ श्लोक्यः पुण्यकीर्तिर्यद्वः पको
पादरजसा तालनीदकेन
नमतुलं नीयागतिस्त्वोचलेभे १४ अपुनन् पवित्रवत्यः याभिरद्भिः स्वर्गं प्राप्ताः १५ प्रा
र्थ्यमानो नमस्कारोऽति देवदेवेति अतः परं अन्यत् श्रेयो नास्तीति बहुधा संबोधयति १६ ॥

१५४

सर्वप्रत्ययहेतुत्वमभिप्रेत्य जनास्तौति नमस्त इति वासुदेवाय चित्ताधिष्ठात्रे सर्वभूतक्षयाय तत्प्राश्र
यः सर्वेषामहंकारस्य प्राणिनामाश्रयः ततश्च अहंकाराधिष्ठात्रे संकर्षणायेत्यर्थः हृषीकेशेति बुद्धिमनसो
रधिष्ठात्रोः प्रद्युम्नानिरुद्धयोरैक्यं कृत्य ग्रहणं पाहि प्रपन्नं पाहीति प्रार्थनम् इति श्रीभावार्थदीपिकायां
दशमस्कन्धे चत्वारिंशः ४० एकचत्वारिंशके हत्वा रजकं प्रविश्य पुरे ततो वयनदातुस्तुष्टः सुदाम्नो वाय
कस्य च १ सगोकमक्रूरमतः प्रमोच्य स्वधाम सद्योनमक्रूपानतः स्वराजधानीं मथुरामयपप्दलेस्य

नमस्ते वासुदेवाय सर्वभूतक्षयाय च हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो॥ ३० इति श्रीभा
गवते महापुराणे दशमस्कन्धे चत्वारिंशोऽध्यायः ४० शुक उवाच स्तुवतस्तस्य भगवान्दर्शयि
त्वा जले वपुः भूयः समाहरत्कृष्णो नटो नाट्यमिवात्मनः १ सोऽपि चान्तर्हितं वीक्ष्य जलादु
न्मज्य सत्वरः कृत्वा चावश्यकं सर्वं विस्मितो रथमागमत् २ तमपृच्छद्धृषीकेशः किं ते दृष्ट
मिवाद्भुतं भूमौ वियति तोये वा तथा त्वां लक्षयामहे ३ अक्रूर उवाच अद्भुतानीह यावन्ति भूमौ वि
यति वा जले त्वयि विश्वात्मके तानि किं मेऽदृष्टं विपश्यतः ४ यत्राद्भुतानि सर्वाणि भूमौ विय
ति वा जले तं त्वानुपश्यतो ब्रह्मन् किं मे दृष्टमिहाद्भुतम् ५ ॥ ॥

तानेतान् महोत्सवाभ्याम् २ भूमौ वियति आकाशे जले च यस्मिन् वायायादयः अद्भुतानि त्वय्येव सन्ति ते
विपश्यतो मे किमद्भुतं अदृष्टं अपितु सर्वं दृष्टमेवेत्यर्थः ४ ननु मत्स्यादिः सर्वमेव ते विस्मितत्वं लक्ष
नास्ति अतो भूमौ वियति जले वा किमप्यद्भुतं दृष्टमेवेति चेत्तत्राह यत्राद्भुतानीति यत्र त्वयि श्रीभगव
ति सर्वाण्यद्भुतानि तं पश्यतो मे अन्यत्र भूम्यादौ किमद्भुतं दृष्टं न किंचिदद्भुतमित्यर्थः ऽवेवास

श्री भा॰ द॰ पू॰ टी॰ १५५

तथा स्वलंकृतानि द्वाराणि येषां तेषु हाटकस्यांतोः केरहौमं कुंभैः दध्या वेदनेन चडहितैः सितैः अक्षतानां च
छागाणोवदीपानां चावलेपो येषु तैः ईदृशैः फलगुच्छेन सह अलंकृताः रंभाकदलीक्रमुकाः पूगाश्च स्वहितैः सके
तुभिः केतवो ध्वजाः तत्सहितैः पट्टिकाः वितस्तिविस्तारपटवस्त्राणि तत्सहितैः तोरणैः द्वारेषु भवनैः
तेषु लानावुपरिक्रमाः तत्पुरितः प्रसूनावलयः केचे पट्टिकाः भवितनादिपल्लवाः तद्यथिपाञ्जलदीपाव

ज्येष्ठप्रतालानवरे अकृहिमद्या विषयाणां वृत्तवर्हिनादितां संक्लिकरण्यापणमार्गचत्वरां
कीर्णमाल्यांकुरलाजतंडुलां २२ आप्तगोकुंभैर्दधिचंदनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः
संवृतरंभाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः २३ तां संप्रविष्टौ वसुदेवनंद
नौ वृतौ वयस्यैर्नरदेववर्त्मना द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सु
काः २४ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः कृतैकपत्रश्रवणै
कनूपुरा नांक्त्वा द्वितीयं त्वपराश्च लोचनं २५ ॥ ॥

लयः तत्सन्निधौ रंभाः क्रमुकाः केतवस्तोरणानि चेति २३ नरदेववर्त्मना राजमार्गेण तांपुरीं संप्रवि
ष्टौ इति द्वितीयांतं २४ औत्सुक्यमेवाह द्वयेन काश्चिदिति विपरीतं धृतानि वस्त्राणि भूषणानि च या
भिस्ताः युगलेषु पादयोः कुंडलकंकणादिषु एकं विस्मृत्य समीयुः कृतमेकमेव पत्रं पयोस्तेश्रवणोया
सा एकमेव नूपुरं चरणाभरणं यासां ताश्च ताश्चान्याः एकस्मिन्नेव लोचने कज्जलं निधायैव २५ ॥ १५५

155

रजकोवस्त्रनिर्णेजकःसएववस्त्राणांरंगमपिकुर्वन्रंगकारःकथितःकुपितः ३४ ईदृशानिगिरिवने
चराश्चयेतेयूयमपरिधत्तउद्वृत्तभावनायांलोट्अभीप्सथप्रार्थयध्वे ३५ राजकुलानिराजकीयाःलुंपं



रजकंकंचिदायांतंरंगकारंगदाग्रजः तस्मैयाचतवासांसिधौतान्यत्युत्तमानिच ३२ श्रीकृ
ष्णउवाच देह्यावयोःसमुचितान्यंगवासांसिचार्हतोः भविष्यतिपरंश्रेयोदातुस्तेनात्रसंशयः
३३ सयाचितोभगवतापरिपूर्णेनसर्वतः साक्षेपंरुषितःप्राहभृत्योराज्ञःसुदुर्मदः ३४ ई
दृशान्येववासांसिनित्यंगिरिवनेचराः परिधत्तकिमुद्वृत्ताराजद्रव्याण्यभीप्सथ ३५ याता
शुबालिशामैवंप्रार्थ्यंयदिजिजीविषा बध्नंतिघ्नंतिलुंपंतिदृप्तंराजकुलानिहि एवंविक
त्थमानस्यकुपितोदेवकीसुतः रजकस्यकराग्रेणशिरःकायादपाहरत् ३७ तस्यानुजी
विनःसर्ववासःकोशान्विसृज्यवै दुद्रुवुःसर्वतोमार्गंवासांसिजगृहेच्युतः ३८ वसित्वात्मप्रि
येवस्त्रेकृष्णःसंकर्षणस्तथा शेषाण्यादत्तगोपेभ्योविसृज्यभुविकानिचित् ३९ ततस्तुवा
यकःप्रीतस्तयोर्वेषमकल्पयत् विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपतः ४० नानालक्षणवेषा
भ्यांकृष्णरामौविरेजतुः स्वलंकृतौबालगजौपर्वणीवसितेतरौ ४१ तस्यप्रसन्नोभगवान्प्रा
दात्सारूप्यमात्मनः श्रियंचपरमांलोकेबलैश्वर्यस्मृतींद्रियं ४२ ॥

तितिःस्वेच्छयेति ३८ वासःकोशान्वस्त्रपुटान् वायकःतंतुवायविशेषःवेषमलंकारंचैलेयैःवस्त्रम
यैराकल्पैःभूषणैः ४० पर्वणिउत्सवे ४१ इहलोकेपरमांश्रियंचबलंचऐश्वर्यंचस्मृतिंचइंद्रियंतत्पाद

नद्धे जने हित्वा अभ्यंजमानाः सखीभिः क्रियमाणतैलाभ्यंगाः अकृतस्नानाः अपोह्य निरस्य २६ प्रगल्भा
या लीलाताभिर्हसितानीक्षणानि च तैः प्रियं रमयतीति श्रीरमणः तेनात्मना वपुषा तासां दृशामुत्सवे
ददत् मनांसि जहार २७ मुहुः श्रुत्वा अनुद्रुतचेतसः सखः तं दृष्ट्वा तस्य प्रेक्षणं च तत्स्मितं च तदेव सुधा तयाऽ

अन्नेन्यपकात्तदपास्य सोत्सुका अभ्यंजमाना अकृतोपमज्जनाः स्वपन्त्य उत्थाय निशम्य निः
स्वनं प्रपाययन्त्योऽर्भमपोह्य मातरः २६ मनांसि तासामरविंदलोचनः प्रगल्भलीलाहसिताव
लोकनैः जहार मत्तद्विरदेन्द्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवं २७ दृष्ट्वा मुहुः श्रुतम
नुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः आनंदमूर्तिमुपगुह्य दृशात्मलब्धं
हृष्यत्त्वचो जहुरनंतमरिंदमाधिं २८ प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखांबुजाः अभ्य
वर्षन्सौमनस्यैः प्रमदा बलकेशवौ २९ दध्यक्षतैः सोदपात्रैः स्रग्गंधैरभ्युपायनैः तावानर्चुः
प्रमुदिताः तत्र तत्र द्विजातयः ३० ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत् या ह्येतावनुप
श्यंति नरलोकमहोत्सवौ ३१ ॥ ॥

तदेव उक्षणं तेन लब्धो मानो याभिस्ताः हृदयाउपगुह्य दृशा नेत्रद्वारेणात्मनि मनसि लब्धं प्राप्तं परिष्वज्य ते
हृष्यन्त्विजत्वचः अनंतमाधिं व्यथां जहुः हे अरिंदम अतिजितकामः इति सेवाप्रनेत्रद्वारा परमार्तिमयायामभा
भूदिति २८ सौमनस्यैः पौष्पैः सुमनस्त्वं हेतुः पोप्पनमानौ भवेतां २९ पौराः पुरस्त्रियः ३१ ॥ ॥

श्री॰
भा॰द॰
स्कं॰
१५७

इतिश्रीभावार्थदीपिकायांदशमस्कन्धेएकचत्वारिंशः ४१ द्विचत्वारिंशकेकुब्जामृजूकृत्यपुरोत्सवम् बधस्तइहलोकेमा
रिष्टगोपालसान्निध्ये अङ्गविलेपाञ्चदनादयः गृहीतान्यङ्गविलेपनभाजनानिययातां रसप्रदः स्मानुख्यदं
१ हे अङ्गने वरोरु मां यदि नाम सैरन्ध्री ब्रूहि इति हे का त्वं तत् एतत् अनुलेपनं कस्य वा उ ह इति निपातौ भविता इति पश्चात् वित
दे अस्मभ्यं अमघः फलदातत्याह न चिरादिति तिस्रोभीवाङ्गरः कस्यां वक्रा अतिविक्रो तेनामयस्याःसा

इतिश्रीभागवतेदशमस्कन्धेएकचत्वारिंशः ४१ शुकउवाच अथव्रजन्राजपथेनमाधवः स्त्रि
यंगृहीताङ्गविलेपभाजनां विलोक्यकुब्जांयुवतींवराननां पप्रच्छयान्तींप्रहसन्रसप्रदः १ कात्वंव
रोर्वेतदुहानुलेपनंकस्याङ्गनेवाकथयस्वसाधुनः देह्यावयोरङ्गविलेपमुत्तमंश्रेयस्ततस्तेनचि
राद्भविष्यति २ सैरन्ध्र्युवाच दास्यस्म्यहंसुन्दरकंससम्मतात्रिवक्रनामाह्यनुलेपकर्मणि म
द्भावितंभोजपतेरतिप्रियंविनायुवांकोऽन्यतमस्तदर्हति ३ रूपपेशलमाधुर्यहसितालापवीक्षि
तैः धर्षितात्माददौसान्द्रमुभयोरनुलेपनं ४ ततस्तावङ्गरागेणस्ववर्णेतरशोभिना सम्प्राप्तपर
भागेनशुशुभातेऽनुरञ्जितौ ५ प्रसन्नोभगवान्कुब्जांत्रिवक्रांरुचिराननां ऋज्वींकर्तुंमनश्चक्रेद
र्शयन्दर्शनेफले ६ ॥

अनुलेपनसाधनक्रियायां कंसस्य बहुमता दास्यस्मि ३ रूपंचसौष्ठवं पेशलं सौकुमार्यं च माधुर्यं स्मि
तञ्च हसितञ्च आलापश्च वीक्षितञ्च तैः धर्षितात्मा मोहितचित्ता सान्द्रं घनं ४ स्ववर्णेतरशोभिना श्याम
हलाभ्यां इतरः पीतादिवर्णः तेन शोभितं यो लेपः तेन संप्राप्तः परो नाम एकरूपितं तौ भागो येन संप्रा
प्तः परभागः शोभातिशयो येन इतिवा तेनानुरञ्जितौ ५ दर्शनेन सद्यः फले दर्शयन् ६ ॥

१५७

157

निमिषेणातिर्यां स्त्रेमदकुरीमदहल्ली १७ तदहिलाणेऽहमातांबध्नामिमितिवदतो जिह्ममदः आहतवेगः
१९ नकेवलेऽप्यहोपि कितभयस्यपशुषः पाकलेरहीनाजगन्नवेति २० पुरतः प्रातस्तौ तत्वमितिपा
लामुखोदेवपुनर्निष्क्रम्य २१ तेजः प्रभावप्रागल्भ्यपुष्पितौ २२ मुकुंदस्यविगमेव्रजात्रिगर्मवसमये

करेणावामेनसलीलमुद्धृतेमध्येवकृत्वानिमिषेणापपपात्तौ तृणाविकल्पप्रवमंजमप्यतोय
पेतदर्दमदकंठकक्रमः १८ यतुषोभज्यमानस्यपाहः खेरादमीदृशः हरयामासपंचाल्ला
केनसमागमपागमत् १९ तदहिलाः सानुचराः कुपिता आततायिनः गृहीतकामाः प्रावश्च
गृह्यतांवध्यतामिति १९ अघनानुरामिप्रायान्विलोक्यबलकेपाचौ कृष्णोधन्वनमादाय
पाकलेनाभ्रजग्मतुः २० बलेचकेसमहितेहत्वापालान्बोनतः निष्क्रम्यवेरमदृष्टौ
निरीक्ष्यपुरसंपदः २१ तयोस्तदद्भुतवीर्यंनिशाम्यपुरवासिनः तेजः प्रागल्भ्यरूपंचमेनिरे
विबुधोत्तमौ २२ तयोर्विचरतोः स्वैरमादित्योलमुपेयिवान् कृष्णरामाहतौगोपैःपुरात्पु
करमीयतुः २३ गोप्योमुकुंदविगमेविरहातुरायाआशासताशिषऋतामधुपुर्यभूवन् से
पश्यतोपुरुषभूषणगात्रलक्ष्मीहित्वेतराम्भजतश्चकमे यनेश्रीः २४ ॥

याआशिषः आशासत मुखेप्रभातारजनीयेत्रेअग्घभुतंतत्रहपोभविष्यतइत्यादियउक्तवत्यः ऋताः
सत्याबभूवुः पुरुषभूषणस्यश्रीकृष्णस्यगात्रलक्ष्मीदेहशोभाकथंभूतस्यगात्रस्यइतरान् ब्रह्मा
दीन्हित्वायदयनमाश्रयेश्रीः कामयामासयोगात्रलक्ष्मीमितिवा २४ ॥ ॥

ग्रैवस्थोहस्तिपकेनचोदिते २ परिकरेणबद्धायचित्तपरिधानेहृत्वागुण्ठितवक्र ४ अंतकोःहन्तुःकालस्तत्रि
मित्रेयमः तत्रयत्नातेकपमायस्यते ५ विगलितोविच्युतःतद्धिनाविहन्यच्युलांपतग्रहपप्योनम्भव ६ अचा
लाणाःअपसृत् घ्राणामवलनेन नछिद्रपानयस्पृष्टः लोचनागोचरमस्यायमयपपवाहिद्राणानजानंती
तिप्रसिद्धेपरामयाहृतवान् पुष्करेणापुच्छाग्रेणामहःकालःप्रसह्यबलेन ८ पञ्चपःपञ्चवापंचविंशतियावत् ।

रंगद्वारंसमासाद्यतस्मिन्नागमवस्थितं अपश्यत्कुवलयापीडंकृष्णोंबष्ठचोदितं २ बद्धःपरिकरंशौ
रिःसमुह्यकुटिलालकान् उवाचहस्तिपंवाचामेघनादगभीरया ३ अंबष्ठांबष्ठमार्गंनोदेह्यपक्र
ममाचिरं नोचेत्सकुंजरंत्वाद्यनयामियमसादनं ४ एवंनिर्भत्सितोंबष्ठःकुपितःकोपितंगजं चो
दयामासकृष्णायकालांतकयमोपमं ५ करींद्रस्तमभिद्रुत्यकरेणतरसाग्रहीत् कराद्विगलितः
सोमुंनिहत्यांघ्रिष्वलीयत ६ संक्रुद्धस्तमचक्षाणोघ्राणदृष्टिःसकेशवं परामृशत्पुष्कराग्रेणसप्र
सह्यविनिर्गतः ७ पुच्छेप्रगृह्यातिबलंधनुषःपंचविंशति विचकर्षयथानागंसुपर्णइवलीलया ८
सपर्यावर्तमानेनसव्यदक्षिणतोच्युतः बभ्रामभ्राम्यमाणेनगोवत्सेनेवबालकः ९ ॥ ॥

तोवत्सेणगजेविचकर्षआकृष्यतीनवान्कइवविचकर्ष यथानागंसर्पंचहननमात्रेणजंसुपर्णइवसुपर्णइव
स्वर्णाइवस्वयमिति आविरासीद्यथाप्राच्यादिषीडाविवशुष्कलइतिवत् ९ सपर्यावर्तमानेति पुच्छग्राहि
णाश्रीकृष्णग्रहणीतेयदिदक्षिणः परिवर्तते गजस्तर्हिसव्यतोभ्रामयति यदासव्यतःपरिवर्ततेतदादक्षिण
तोभ्रामयत्तनसहबभ्राम गोवत्सेनभ्राम्यमाणेनबालकः सपवत्कृष्णायथाअन्योन्यंवाबालकइवेति ९

श्री॰ भा॰ द॰ पू॰ १९

161

पृथुकाःपोवहाः अन्येचान्येमहादयः अश्रमेऽपात् अश्रयुक्तो अश्रमेबलमितिवा अश्रमेयथाभवेत्ति तथातं
तिष्ठति २८ अनेनपरिरक्षितायदोर्वंशः सबहुविश्रुतःसन्श्रियादिलप्स्यतइति २९ धेनुकवत्सासोऽसुविप
र्ययोक्तिः जनवादेषुनिशम्यात् ३॰ जनेष्वेवंब्रुवाणेषुसत्सुचाणूरोऽसहमानस्तत् अब्रवीदितिहेकंसप्रियेक

पूतनानेननीतांतंचक्रवातश्चदानवाः अर्जुनौगुह्यकःकेशीधेनुकोऽन्येचतद्विधाः २५ गावःसपालाएतेन
दावाग्नेःपरिमोचिताः कालियोदमितःसर्पइन्द्रश्चविमदःकृतः २६ सप्ताहमेकहस्तेनधृतोऽद्रिप्रवरोमुना
वर्षवाताशनिभ्यश्चपरित्रातंचगोकुलं २७ गोप्यस्यनित्यमुदितहसितप्रेक्षणंमुखं पश्यंत्योविविधांस्ता
पांस्तरंतिस्माश्रमंमुदा २८ वदंत्यनेनवंशोऽयंयदोःसबहुविश्रुतः श्रियंयशोमहत्वंचलप्स्यतेपरिर
क्षितः २९ अयंचास्याग्रजःश्रीमान्रामःकमललोचनः प्रलंबोनिहतोयेनवत्सकोधेनुकादयः ३० जने
ष्वेवंब्रुवाणेषुतूर्येषुनिनदत्सुच कृष्णरामौसमाभाष्यचाणूरोवाक्यमब्रवीत् ३१ हेनंदसूनोहेरामभ
वंतौवीरसंमतौ नियुद्धकुशलौश्रुत्वाराज्ञाहूतौदिदृक्षुणा ३२ प्रियंराज्ञःप्रकुर्वंत्यःश्रेयोविंदंतिवैप्रजाः
मनसाकर्मणावाचाविपरीतमतोऽन्यथा नित्यंप्रमुदितागोपावत्सपालायथास्फुटं ३३ वनेषुमल्ल
युद्धेनक्रीडंतश्चारयंतिगाः ३४ तस्माद्राज्ञःप्रियंयूयंवयंचकरवामहे भूतानिनःप्रसीदंतिसर्वभूतमयोनृ
पः ३५ तन्निशम्याब्रवीत्कृष्णोदेशकालोचितंवचः नियुद्धमात्मनोऽभीष्टंमन्यमानोऽभिनंद्यच ३६

करवामेतिराज्ञिप्रीतेभूतानिचप्रसीदेयुः ३७ यथोचितंनियुद्धंवाक्रुद्धंभवेत्मल्लसभाधिकृतान् अधर्मोमास्पृ
शेत्नःस्पृशेदित्यर्थः हेमल्लेतिवा ३८ सहस्रद्विपानांसत्वंबलंबिभर्तीति ३९ ॥ १९

भयानकश्च बीभत्सः पान्तः सप्रेमभक्तिकाः अविद्वांसो विराड्विविकल्पोपर्यसौ राजन्त इति वा अनेन बीभत्स उक्तः
विकल्पत्वं च वक्तुं च वज्रसारसर्वाङ्गो इत्यादिना वर्ण्यते उद्विविजे भीतो बभूव १८ यथा नटावित्ति निर्भयत्वे दर्शित
म् १९ प्रहर्षवेगेनोत्कलितानि उज्जृम्भितानि ईक्षणानि च येषां ते तथा ये ता नमने परे यतः नन्दमानि राकाह्ला वभूवुरि
त्यर्थः २० नदेवाह पिबन्त एवेति श्लिष्यन्तः परिष्वंगं कुर्वन्त इव लालितानात्यर्थः २२ यथा दृष्टं यच्छ्रुतं गर्गादिभ्यः

एते कुवलयापीडं दृष्ट्वा तावपि दुर्जयौ कंसो मनस्व्यपि तदा भृशमुद्विविजे नृप १८ तौ रेजतू रंगग
तौ महाभुजौ विचित्रवेषाभरणस्रगम्बरौ यथा नटावुत्तमवेषधारिणौ मनः क्षिपन्तौ प्रभया निरी
क्षतां १९ निरीक्ष्य ता— उत्तमपूरुषौ जना मंचस्थिता नागरराष्ट्रका नृप प्रहर्षवेगोत्कलितेक्ष
णाननाः पपुर्न तृप्ता नयनैस्तदाननं २० पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया जिघ्रन्त इव नासा
भ्यां श्लिष्यन्त इव बाहुभिः २१ ऊचुः परस्परं ते वै यथा दृष्टं यथा श्रुतं तद्रूपगुणमाधुर्यप्रागल्भ्यस्मा
रिता इव २२ एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि २३
एष वै किल देवक्यां जातो नीतश्च गोकुले कालमेतं वसन्गूढो ववृधे नन्दवेश्मनि २४ ॥ ॥

यथाश्रुतं तेजोवर्द्धनोद्धरणादि न तदनतिक्रम्य तदनुरूपमित्यर्थः अन्यत्रैव च तयो रूपे राजदन्तादिगुणं
येत्रोदयः माधुर्यं हसितालापादि प्रागल्भ्यं धाष्टर्यं तैः स्मारिताः स्वस्मरणं प्रापिता इत्यर्थः विस्मिता नो वा
स्यान्यथा हृष्टभिः किलेति सर्वेजानन्तयः २४ ॥ ॥ राम ॥

श्री
भा०द०
सु०टी०
१९३

163

टि० या दोहनादिषु एनं गायन्ति ता व्रजस्त्रियो धन्याः प्रेङ्खोलनं दोलान्दोलनं उक्षणं सेचनं एकं पुत्रादौ उरुक्रमे चित्तेनै
व यानं येषां ते विषयशालिन्यो यासां ताः यद्वा उरुक्रमचित्तयोनिरुक्त्यर्थः १५ प्रातरिति या अस्य वेणुं निशम्य गृहा
त्तूर्णं निर्गम्य पथि सस्मितमुखं पश्यन्ति ता भूरिपुण्या इति १६ सभया भयसहिताः स्त्रीणां गिरः श्रुत्वा पुत्रयोः

यादोहनेऽवहनने मथनोपलेपप्रेङ्खोलनार्भरुदितोक्षणमार्जनादौ गायन्ति चैनमनुरक्तधियोऽश्रु
कण्ठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः १५ प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वण
यतोऽस्य निशम्य वेणुं निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यन्ति सस्मितमुखं सदयावलोकं
१६ एवं प्रभाषमाणासु स्त्रीषु योगेश्वरो हरिः शत्रुं हन्तुं मनश्चक्रे भगवान्भरतर्षभ १७ सभया
स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ पितरावन्वतप्येतां पुत्रयोरबुधौ बलं १८ तैस्तैर्नियुद्धविधि
भिर्विविधैरच्युतेतरौ युयुधाते यथान्योन्यं तथैव बलमुष्टिकौ १९ भगवद्गात्रनिष्पातैर्वज्र
निष्पेषनिष्ठुरैः चाणूरो भज्यमानाङ्गो मुहुर्ग्लानिमवाप ह २० स श्येनवेग उत्पत्य मुष्टीकृत्य क
रावुभौ भगवन्तं वासुदेवं क्रुद्धो वक्षस्यबाधत २१ ॥

स्नेहेन या शुक् तया शुचा आतुरौ विह्वलौ पुत्रयोर्बलमजानन्तौ पितरौ अन्वतप्येतां आसमाविति १८ तदा
श्रीभगवतो गात्राणां मर्दनादीनां निष्पातैः प्रहारैः वज्रनिष्पेषस्येव तीव्रः प्रतापः तद्वन्निष्ठुरैः भज्यमा
नाङ्गः ग्लानः श्येनस्येव वेगो यस्य सः चाणूरः अबाधत ताडयत् २१ ॥ ॥

भूपृष्ठे भुवडपतितं पोथयामास सम्यगास्फालयत् पैङ्गध्वजो वज्रं यद्वाऽऽङ्गध्वजो नाम मगोऽडेश्वरस्मिन्हः कस्मि
चिद्गतस्य वेगमहतस्तस्य मोक्षजयनकाघलेक्षतः पुरुषाक्रान्ति कद्रूयते मगध्यापतत्तितद्वदपतदिति २१
नाचलन्नप्रहारेण मालाहत इवेद्विपः बाहौ निगृह्य चाणूरं बहुशो भ्रामयन्हरिः २२ भूपृ
ष्ठे पोथयामास तरसा तीर्णजीवितं विस्रस्ताकल्पकेशस्रग्गिरिध्वज इवापतत् २३ तथैव
व मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै बलभद्रेण बलिना तलेनाभिहतो भृशं २४ प्रवेपितः
स रुधिरमुद्वमन्मुखतोऽर्दितः व्यसुः पपातोर्व्युपस्थे वाताहत इवाङ्घ्रिपः २५ ततः कूटमनुप्रा
प्तं रामः प्रहरतांवरः अवधील्लीलया राजन्सावज्ञं वाममुष्टिना तर्ह्येव हि शलः कृष्णपदापह
तशीर्षकः द्विधा विदीर्णस्तोशलक उभावपि निपेततुः २६ चाणूरे मुष्टिके कूटे शले तोशल
के हते शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः २७ गोपान्वयस्यानाकृष्य तैः संसृज्य विज
हतुः वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ २८ जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः २९
ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ३० हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट् न्यवारयत्स्व
तूर्याणि वाक्यं चेदमुवाच ह ३१ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् धनं हरत गोपानां
नन्दं बध्नीत दुर्मतिं ३२ वसुदेवस्तु दुर्मेधा हन्यतामाश्वसत्तमः उग्रसेनः पिता चापि सानुगः प
रपक्षगः ३३ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः लघिम्नोत्पत्य तरसा मञ्चमुत्तुङ्ग
मृदितः पीडितः दुर्बुद्धिपक्षे भ्रमतेन २३ कलाभ्यां कृतौ २८ साधु साध्विति वदन्तः ३०  ज्यायत्र

श्री॰
भा॰ द॰
पू॰ टी॰
१६५

तदेव दर्शयति उवाचेत्यादि अष्टभिः श्लोकैः प्रीणयन्सादरं स्तुवन् २ अस्मत्तः अस्मन्निमित्तेन नित्यमुत्कण्ठित
योरपि युवयोः पुत्राभ्यामावाभ्यां कृत्वा बाल्यपौगण्डकैशोराः न तत्तद्वयस्यानुभवसुखानीत्यर्थः तेनाभवन्नि
त्यस्मत्तः पुत्राभ्यामिति सामान्याधिकरण्येन वा ३ आवाभ्यां दैवहतेनावित्याह न लब्ध इति पितृगेहस्था बाला
यां मुदं विन्दन्ते तामनलब्धेति एवं तावत् श्लोकद्वयेन युवयोरावयोश्च कामहानिर्जातेत्युक्तं ४ आवयोः पुनर्गु
र्वपरिचर्यालोपेन धर्महानिरपि जातेत्याह सर्वार्थसंभव इति सर्वेषां धर्मार्थकाममोक्षाणां संभवो यस्मिन्स देहो

उवाच पितरावेत्य साग्रजः सात्वतर्षभः प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरं २ श्रीकृष्ण उवाच ना
स्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन्क्वचित् ३ न लब्धो दै
वहतयोर्वासो नौ भवदन्तिके यां बालाः पितृगेहस्था विन्दन्ते लालिता मुदं ४ सर्वार्थसंभवो दे
हो जनितः पोषितो यतः न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ५ यस्तयोरात्मजः कल्प आत्म
ना च धनेन च वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि ६ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुं गु
रुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ७ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः मोघमेते

भा॰ स्कं॰ १० अ॰ ४५ ॥

यतः याभ्यां जनितः पोषितश्च तयोः पित्रोर्निर्देशं मात्रमपि मर्त्यः शतसंवत्सरमात्रेणायुषा न प्राप्नोति ५ त
योः पित्रोः यः पुत्रः कल्पः समर्थः सन्नपि देहेन धनेन च पित्रोर्वृत्तिं जीविकां न संपादयेत् तं प्रेत्य लोकान्तरे
यमदूताः स्वमांसं खादयन्ति हीति ६ किंच मात्रादिषु भरणमकुर्वन्नपि फलं जीवितं च भवतीत्याह मा
तरमिति अबिभ्रत् अपुष्णन् श्वसन्नपि मृततुल्य एवेति ७ तत्तस्मान्नौ आवयोः मोघमेव व्यर्थमनवेतो रक्षन्त्य

॥ ७ ॥
टी॰
१६५

165

श्री· भा·द· प्रा·टी· २६६

266

भूयामात्मनोप्यधिकोलयोपविनीनवाञ्छायेमनदित्याह पित्रोरिति आत्मनो देहाद्यात्मजेभ्योधिकाहि प्रीति
रिति २२ देवकीवसुदेवयोः पुत्रोगुर्वोलालसात्मजो विलिनवाञ्छामित्याह सपितेति २३ सव्रजव्रजवासिभिः
सहितेजप्यानिखवर्णारजनीतिरिक्तकैप्याद्यियाजादीनितत्प्रभृतिभिः २५ पुरोधसागर्गाचार्येणाद्विजसे

कृष्णनंदसमामाघभगवान्देवकीसुतः संकर्षणश्चराजेंद्रपरिष्वज्यदनन्दनः १२ पितर्युवाभ्यां
स्निग्धाभ्यांपोषितौलालितौभृशं पित्रोरभ्यधिकाप्रीतिरात्मजेष्वात्मनोपिहि २२ सपिता सा
चजननीयोपुष्णीतांस्वपुत्रवत् शिशून्बंधुभिरुत्सृष्टानकल्पैःपोषरक्षणे २३ यातयूयंव्रजंतात
तवयेचस्नेहदुःखितान् ज्ञातीन्वोद्रष्टुमेष्यामोविधायसुहृदांसुखं २४ एवंसांत्वय्यभगवान्नंद
सव्रजमच्युतः वासोलंकारकुप्याद्यैरर्हयामाससादरम् २५ इत्युक्तस्तौपरिष्वज्यनंदःप्रणय
विह्वलः पूरयन्नश्रुभिर्नेत्रेसहगोपैर्व्रजंययौ २६ अथशूरसुतोराजन्पुत्रयोःसमकारयत् पु
रोधसाब्राह्मणैश्चयथावद्द्विजसंस्कृतिं २७ तेभ्योदाद्दक्षिणागावोरुक्ममालाःस्वलंकृताः
स्वलंकृतेभ्यःसंपूज्यसवत्साःक्षौममालिनीः याःकृष्णरामजन्मर्क्षेमनोदत्तामहामतिः ता
श्चाददादनुस्मृत्यकंसेनाधर्मतोहृताः २८ ततश्चलब्धसंस्कारौद्विजत्वंप्राप्यसुव्रतौ गर्गा
द्यदुकुलाचार्याद्गायत्रंव्रतमास्थितौ २९ ॥

स्कृतिरुपनयनं २७ गावोगाःरुक्मस्यमालाःविद्यंतेयासांताःक्षौमवस्त्रमालावतीः २८ याःपूर्वंमनोद
त्ताःश्रीमन्नतापवाददत् नत्वताःकंसेनाहृताःसत्पराजगोष्ठादाक्षिप्यहृताःइत्याहकंसेनाधर्मतोहृता

२६६

दुर्हृदा कंसेन ९ त्वमेवाज्ञापयेति मा वादत्याह ययातिशापादिति तव त्वयादवत्वयादवत्वे
पि मदाज्ञाया न दोष इति भावः १३।१४ मम नाहरणीयता किं नास्तीति चेत् तत्राह मयीति मत्प्रसादेन सर्वे

तत्क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदा भृशम् ९ श्रीशुक उवा
च इति मायामनुष्यस्य हरेर्विश्वात्मनो गिरा मोहितावङ्कमारोप्य परिष्वज्यापतुर्मुदम् १० सिं
चन्तावश्रुधाराभिः स्नेहपाशेन चावृतौ न किंचिदूचतू राजन्बाष्पकण्ठौ विमोहितौ ११ एवमाश्वा
स्य पितरौ भगवान्देवकीसुतः मातामहं तूग्रसेनं यदूनामकरोन्नृपम् १२ आह चास्मान्महाराज
प्रजाश्चाज्ञप्तुमर्हसि ययातिशापाद्यदुभिर्नासितव्यं नृपासने १३ मयि भृत्य उपासीने
भवतो विबुधादयः बलिं हरन्त्यवनताः किमुतान्ये नराधिपाः १४ सर्वान्स्वान् ज्ञातिसंबं
धान् दिग्भ्यः कंसभयाकुलान् यदुवृष्ण्यन्धकमधुदाशार्हकुकुरादिकान् १५ सभाजितान्
समाश्वास्य विदेशावासकर्शितान् न्यवासयत्स्वगेहेषु वित्तैः संतर्प्य विश्वकृत् १६ कृष्ण
संकर्षणभुजैर्गुप्ता लब्धमनोरथाः गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः १७ वीक्षन्तोऽह
रहः प्रीता मुकुन्दवदनाम्बुजं नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् १८ तत्र प्रवयसोऽप्या
सन्युवानोऽतिबलौजसः पिबन्तोऽक्षैर्मुकुन्दस्य मुखाम्बुजसुधां मुहुः १९ ॥

भविष्यतीत्यर्थः १५ स्वान् ज्ञातीन् संबंधांश्च दिग्भ्य आनीयेति १६ सिद्धाः पूर्णाः कृष्णरामाभ्यां गतो
निवृत्तो ज्वरः संतापो येषां ते १७ सदयस्मितवीक्षणं यस्मिंस्तत् १८ प्रवयसो वृद्धा अपि युवानो

श्री॰
भा॰द॰
सू॰श्री॰
१६१

चित्रायोगः १३ माल्यग्रथनविकल्पाः १४ शीर्षापीडयोजनं १५ नेपथ्यायोगः १६ कर्णपत्रभंगः १७ ग
न्धयुक्तिः १८ भूषणाभूषणं १९ इन्द्रजालं २० कौमारयोगाः २१ हस्तलाघवं २२ चित्रशाकापूपभ
क्ष्यविकारक्रियाः २३ पानकरसरागासवयोजनं २४ सूचीवानकर्म २५ सूत्रक्रीडा २६ वीणाडमरुक
वाद्यानि २७ प्रहेलिका २८ प्रतिमाला २९ दुर्वचकयोगाः ३० पुस्तकवाचनं ३१ नाटकाख्यायिकाद
र्शनं ३२ काव्यसमस्यापूरणं ३३ पट्टिकावेत्रबाणविकल्पाः ३४ तर्ककर्माणि ३५ तक्षणं ३६ वास्तु
विद्या ३७ रूप्यरत्नपरीक्षा ३८ धातुवादः ३९ मणिरागज्ञानं ४० आकरज्ञानं ४१ वृक्षायुर्वेदयोगाः ४२

267

द्विजन्तयोस्तन्महिमानमद्भुतं मेलस्यराजश्रुतिमानुषीमति संमेऽप्यपत्यासमहार्णवेन्द्रतंबाले
प्रभासेवरयो बभूव ह ३०॥

मेषकुक्कुटभावयोगविधिः ४३ शुकशारिकाप्रलापनं ४४ उत्सादनं ४५ केशमार्जनकौशलं ४६
अक्षरमुष्टिकाकथनं ४७ म्लेच्छतर्कविकल्पाः ४८ देशभाषाज्ञानं ४९ पुष्पशकटिका ५० निमि
त्तज्ञानं ५१ यंत्रमातृकाधारणमातृकासंवाच्यं ५२ मानसीकाव्यक्रिया ५३ अभिधानकोषः ५४ छ
न्दोज्ञानं ५५ क्रियाविकल्पाः ५६ छलितकयोगाः ५७ वस्त्रगोपनानि ५८ द्यूतविशेषाः ५९ आकर्ष
क्रीडा ६० बालक्रीडनकानि ६१ वैनायिकानां ६२ वैजयिकानां ६३ वैयासिकानां च विद्यानां ६४ इति
चतुष्षष्टिकलाः छंदयामास ततः प्रभासेनामहत्त्वे महार्णवेन्द्रतंबालवरयामास ३१ यमः ॥

श्री
भा० द०
पु० टी०
२६८

हेटीरे ४८ अनिलवन्रंहोयस्यतेनपर्जन्योमेघनदत्रारवोयस्योन ४९ नष्टमदृष्टेनतत्तुमलब्धंधनेयाभि
स्ताइव ५० इतिश्रीभावार्थदीपिकायांदशमेपंचचत्वारिंशोऽध्यायः ४५ षट्चत्वारिंशकेशोषमुद्धवंप्रेष्यतद्गिरा य
शोदानंदयोःश्रुक्रेकृष्णःशोकापनोदनं कामचारोद्विजातिःमन्यरिपुस्यातिसयतः गुरोर्ज्ञानमनुश्रा
प्यमखागोपीरुपादिशान् सोतनमतिरहस्येमन्त्रीत्रिसाध्यमितितदर्थः उद्धवेविपिनेछिद्दलीनामि

गच्छन्तोस्वगृहंवीरैकीर्तिर्वीमतत्पावनी छेदोमयायातथामातिमवर्थविहपराव ४८ शुकउ
वाच गुरुणैवमनुज्ञातोरथेनानिलरंहसा आयातोस्वपुरंतातपर्जन्यनिदनेनवै ४९ स्वनन्
दन्प्रजाःसर्वाहृष्टाराममजनार्दनौ अपश्यन्त्योबहृहानिनष्टलब्धधनाइव ५० इतिश्रीभागव
ते०दशमेपंचचत्वारिंशोऽध्यायः ४५ शुकउवाच वृष्णीनांप्रवरोमन्त्रीकृष्णस्यदयितःसखा शि
ष्योबृहस्पतेःसाक्षादुद्धवोबुद्धिसत्तमः १ तमाहभगवान्प्रेष्ठंभक्तमेकान्तिनंक्वचित् गृही
त्वापाणिनापाणिंप्रपन्नार्तिहरोहरिः २ श्रीभगवानुवाच गच्छोद्धवव्रजंसौम्यपित्रोर्नौप्री
तिमावह गोपीनांमद्वियोगाधिंमत्संदेशैर्विमोचय ३ तामन्मनस्कामत्प्राणामदर्थेत्यक्तदे
हिकाः येत्यक्तलोकधर्माश्चमदर्थेतान्बिभर्म्यहं ४ ॥

तिबुद्धिसत्तमःबुद्धिमतिश्रेष्ठः १ गोपीनांविशेषतःसंदेशकारणमाहतामइतिमय्येवसंकल्पात्मकंमनो
यासांताः अहमेवप्राणायासांताःमदर्थेत्यक्तदेहिकाःपतिपुत्रादयोयाभिस्ताःततःकिमतआहये
त्यक्तलोकधर्माइतिसनिमित्तंत्यक्तोलोकधर्मोइदानेउक्तस्वतत्साधनानिचयैस्तान्बिभर्मिपा
लयामिसंवर्धयामीत्यर्थः ४ ॥

268

पंचजनस्य अंगे ग्रहार्थीत् स च महान् ममासाध्य इत्यर्थः ४० सपर्यां पूजां ४३ सर्वेषां भूता
नामाशया अन्तःकरणानि तानि आलयो निवासो यस्य तं ४४ निजकर्मबंधनं यस्य तं तथाभू

तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरंतविक्रमौ वेलामुपव्रज्य निषीदतुः
क्षणं सिंधुर्विदित्वार्हणमाहरत्तयोः ३८ तमाह भगवानाशु गुरुपुत्रः प्रदीयतां योऽसा
विह त्वया ग्रस्तो बालको महतोर्मिणा ३९ समुद्र उवाच नैवाहार्षमहं देव दैत्यः पंच
जनो महान् अंतर्जलचरः कृष्ण शंखरूपधरोऽसुरः ४० जलमाविश्य तं हत्वा नापश्य
दुदरेऽर्भकः तदंगप्रभवं शंखमादाय रथमागमत् ४१ ततः संयमनीं नाम यमस्य
दयितां पुरीं गत्वा जनार्दनः शंखं प्रदध्मौ सहलायुधः ४२ शंखनिर्ह्रादमाकर्ण्य प्रजा
संयमनो यमः तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहितां ४३ उवाचावनतः कृष्णं सर्व
भूताशयालयं लीलामनुष्ययोर्विष्णो युवयोः करवाम किं ४४ कृष्ण उवाच गुरुपु
त्रमिहानीतं निजकर्मनिबंधनं आनयस्व महाराज मच्छासनपुरस्कृतः ४५ तथेति ते
नोपानीतं गुरुपुत्रं यदूत्तमौ दत्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः ४६ सम्यक्संपा

तमपि मच्छासनपुरस्कृतः मच्छासनेनाग्रे कृतः आनय त्वं ततस्तेन दीयत इत्यर्थः ४५ वत्सेति प्राधा
न्येन एकस्य संबोधनं गुरोर्निष्क्रियो गुरुदक्षिणा युष्मद्विधयोर्गुरोः कामानां मध्ये को नु कामोऽव

पुज्ञौ कामौ नामावशिष्टौ ४८ ॥

[illegible]

169

धेऽसद्भूहः १३ अर्चयन्पूजयामास १४ साधूनामिति कर्मणि षष्ठी १७ गावो गाः गिरिं गोवर्द्धनं १८ अपि द्रक्ष्या
यास्यति द्रक्ष्याम इति किं १९ श्रीकृष्णोपकारस्मरणाद्विह्वलः सन् उपमानेनाभिभूयस्तदाह दावाग्निरित्यादि त्रि
वान् वर्षाच्चेति ह्यपात्त्वर्षाच्चेति अन्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः श्रीकृष्णेन रक्षिताः स्म २० किंच स्मरतामिति

सर्वतः पुष्पितवनं द्विजालिकुलनादितं हंसकारण्डवाकीर्णैः पद्मषण्डैश्च मण्डितं १३ तमागतं समाग
म्य कृष्णस्यानुचरं प्रियं नंदः प्रीतः परिष्वज्य वासुदेवधियार्चयत् १४ भोजितं परमान्नेन संविष्टं कशि
पौ सुखं गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः १५ कच्चिदंग महाभाग सखा नः शूरनंदनः आ
स्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः १६ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना सा
धूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा १७ अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन् गोपा
न्व्रजं चात्मनाथं गावो वृंदावनं गिरिं १८ अप्यायास्यति गोविंदः स्वजनान्सकृदीक्षितुं तर्हि द्रक्ष्या
म तद्वक्त्रं सुनसं सुस्मितेक्षणं १९ दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः दुरत्ययेभ्यो मृत्यु
भ्यः कृष्णेन सुमहात्मना २० स्मरतां कृष्णवीर्याणि लीलापांगनिरीक्षितं हसितं भाषितं चां
ग सर्वा नः शिथिलाः क्रियाः २१ सरिच्छैलवनोद्देशान्मुकुंदपदभूषितान् आक्रीडानीक्ष्यमा
णानां मनो याति तदात्मतां २२ मन्ये कृष्णं च रामं च प्राप्ताविह सुरोत्तमौ सुराणां महदर्थाय गर्गस्य

लीलया यो गेन निरीक्षितं अंग हे उद्धव २१ न केवलं शिथिला एव किंतु पात्ते तु परमेतीत्याह सरिच्छैले
ति सरित्पर्वतावनोद्देशाच्चतान् आक्रीडान् क्रीडास्थानानि २२ सुराणामर्था
यमहदर्थाय गर्गस्य वचनं यथा २३ ॥ रामः

तासां वियोगमाविर्दर्शयति द्वयेन मयिततं अतिविरहोत्कंठ्येन विह्वलाः परवशाः गोकुलात् निर्गमनसम
ये पुनरागमिष्यामीति प्रत्यागमनसंदेशाः तैः मदीयाबल्यो गोप्यः मदात्मिकाः अतितासां सात्मा
स्वदेहे यदि स्यात् तर्हि विरहतापेन दह्येतैव मयि वर्तमानत्वात् जीवंतीति भावः ६ संदेशाभवतीनं
वियोगोपीभिः सुहातत्वेन तदंगसंगलब्धानिति सूचयति ७ व्रजे वर्णयति पंचभिः वासिताः पुष्पवत्यो गा

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः स्मरंत्योंग विमुह्यंति विरहौत्कंठ्यविह्वलाः ५ धारयं
त्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः ६ शुक उवा
च इत्युक्त उद्धवो राजन्संदेशं भर्तुरादृतः आदाय रथमारुह्य प्रययौ नंदगोकुलं ७ प्राप्तो नंदव्र
जं श्रीमान्निम्लोचति विभावसौ छन्नयानः प्रविशतां पशूनां खुररेणुभिः ८ वासितार्थेभियु
ध्यद्भिर्नादितं शुष्मिभिर्वृषैः धावंतीभिश्च वास्राभिरूधोभारैः स्ववत्सकान् ९ इतस्ततो वि
लंघद्भिर्गोवत्सैर्मंडितं सितैः गोदोहशब्दाभिरवं वेणूनां निःस्वनेन च १० गायंतीभिश्च कर्मा
णि शुभानि बलकृष्णयोः स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितं ११ अग्न्यर्कातिथिगोवि
प्रपितृदेवार्चनान्वितैः धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमं १२ ॥

वृषैः नदितं भित्ते प्रमितो युध्यद्भिः शुष्मभिः मत्तैः गोवृषैः नादितं व वास्राभिः धेनुभिः स्ववत्सकान्प्रति ९ वि
लंघद्भिः उत्प्लवद्भिः गोदोहशब्दैः सहाभितो रवाः मंडनमंडनपत्रादि रूपरूपाणि देहीत्यादयो यस्मि
न्नं वेणूनां निःस्वनेन १० गायंती निर्गोपीभिः गोपैश्च सुविराजितं ११ अग्न्यादिर्चनान्वितैः धूपैश्च म

॥ ॥ ८ श्रीकृ

श्री॰
भा॰ द॰
सू॰ टी॰
१२॥

270

न्यायेवाह यस्मिन्निति द्वाभ्यां कर्माशयं कर्मणां यत्कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपस्तन्मया
न् अर्कवर्णः शुद्धसत्वमूर्तिः सन् परां गतिं तत्पदं याति ३२ अखिलस्यात्मा चासौ हेतुश्च तस्मिन्कारणेन म
नुष्याकृतौ महात्मनि पाणिग्रहणौ भवन्तौ भक्तिं कुरुतः अतः कृतकृत्यावित्यर्थः ३३ अतस्तमाह आगमिष्य
तीति पित्रोर्युवयोः यात्तद्यं व्रजं गत्वा तव यच्च स्नेहदुःखिनां तानीनवां हृत्मेष्यामीति विधाय दी स्व

एतौ हि विश्वस्य च बीजयोनी रामो मुकुन्दः पुरुषः प्रधानम् अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशा
त इमौ पुराणौ ३१ यस्मिन्जनः प्राणवियोगकाले क्षणं समावेश्य मनो विशुद्धम् निर्हृत्य कर्माशय
माशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः ३२ तस्मिन्भवन्तावखिलात्महेतौ नारायणे कारणमर्त्य
मूर्तौ भावं विधत्तां नितरां महात्मन् किं वावशिष्टं युवयोः सुकृत्यं ३३ आगमिष्यत्यदीर्घेण
कालेन व्रजमच्युतः प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः ३४ हत्वा कंसं रङ्गमध्ये प्रतीपं
सर्वसात्वतां यदाह वः समागत्य कृष्णः सत्यं करोति तत् ३५ मा खिद्यतं महाभागौ द्रक्ष्यथः कृ
ष्णमन्तिके अन्तर्हृदि स भूतानामास्ते ज्योतिरिवैधसि ३६ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वास्त्य
मानिनः नोत्तमो नाधमो वापि समानस्यासमोऽपि वा ३७ रामः ॥

मिति यदाह कृष्णः तत्सत्यं करिष्यतीत्यर्थः ३४ कालविलम्बमसहमानौ प्रत्याह मा खिद्यतामिति हे
महाभागौ अन्तिके इदानीमेव समीपे वा कुत इत्यत आह अन्तर्हृदीति तर्हि सर्वैः किमिति न दृश्यते तत्राह
ज्योतिरिति तथा यथा मथनेन विना न दृश्यते तथा भक्तिं विना हृत्स्थोपीति भावः ३६ अहो प्राप्तामेव तस्य
त्विहागमने स्वस्यास्ति प्रियाप्रियत्वादीन्विहाय न मे गच्छते मन्यते तत्राह न ह्यस्येति ब्रह्म प्रियाद्यो न हि सन्ति

॥ ४६
१२॥

न केवलं तद्वचनानुसारेणैव व्यवहारमेवाह्यपीत्याह कंसमिति २४ इभराट् यष्टिमिव तालत्रयं महा
सारं धनुर्बभञ्ज २५ अखिलगुरुत्वमेव जनकत्वेन नियन्तृत्वेन चाह एतावितिद्वाभ्यां कुंदहेत्येतौ विश्वस्य बी
जयोनी निमित्तोपादाने ननु पुरुषप्रधानयोर्बीजयोनीति प्रसिद्धं मतं तत्राह पुरुषः प्रधानमिति पुरुषः प्रधा
नेभ्यामपि अन्तः प्रधानपुरुषावेष्टितावित्यर्थः एवं जनकत्वमुक्त्वा किंच अन्वीय भूतेषु अनुप्रविश्य भूता

कंसं नागायुतप्राणं मल्लौ गजपतिं तथा अवधिष्टां लीलयैव पशूनिव मृगाधिपः २४ तालत्रयं महा
सारं धनुर्यष्टिमिवेभराट् बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिं २५ प्रलम्बो धेनुकोऽरिष्टस्तृणावर्तो
बकादयः दैत्याः सुरासुरजितो हता येनेह लीलया २६ श्रीशुक उवाच इति संस्मृत्य संस्मृत्य नन्दः कृ
ष्णानुरक्तधीः अत्युत्कण्ठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः २७ यशोदा वर्ण्यमानानि पुत्रस्य चरितानि
च शृण्वन्त्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा २८ तयोरित्थं भगवति कृष्णे नन्दयशोदयोः वी
क्ष्यानुरागं परमं नन्दमाहोद्धवो मुदा २९ उद्धव उवाच युवां श्लाघ्यतमौ नूनं देहिनामिह मानद
नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी ३० ॥ ॥

नात्र उपहितस्य विलक्षणस्य चिन्मात्रभेदस्य ज्ञानस्य च जीवस्य ईशाते ईशाते नियन्तारौ भवतः ऊतः पुराणौ
मूलादीनामनादित्वात् कारणत्वेन नतत्त्वनियन्तृत्वमित्यर्थः ननु सृष्ट्यादिसमावेशात्मनुष्यादिवत् जन्म
दर्शनात्तस्यान्येभ्यः को विशेष ३१ ॥ ॥

सोपिजन्मकर्मादिरहितोपिक्रीडाप्रयोजनःसन् साधूनांपरिपालनायसदसन्मिश्रयोनिषु सात्विकराजसतामसयोनिषु यज्ञदेवादिमत्स्यादिनृसिंहादियोनिषुकल्पते आविर्भवतीत्यर्थः ३९ ननुजन्मकर्मादिरहितस्यकुतस्तत्तद्गुणत्राह सत्वमितिक्रीडन्नतीतोपिक्रीडन् तथापिमायागुणैः इदंदृष्टान्तर्थः भ्रमविघ्नापायेजीवस्यकर्तृत्वेतद्दृष्टान्तेनाह यथाविघ्नेयेवकर्तृत्वमिति ४० सदृष्टान्तमाह यथेतिभ्रमरिकाभ्रमणेपरिभ्रमणेतयोपलक्षितयादृष्ट्याभ्रमद्भिर्भ्राम्यतीति यथाभ्रमतीयतएवंचित्तेकर्तरिसतितत्रचित्तेक

नमातानपितातस्यनभार्यानसुतादयः नात्मीयोनपरश्चापिनदेहोजन्मएवच ३८ नचास्यकर्म वालोकेसदसन्मिश्रयोनिषु क्रीडार्थःसोपिसाधूनांपरित्राणायकल्पते ३९ सत्वंरजस्तमइति भजतेनिर्गुणोगुणान् क्रीडन्नतीतोत्रगुणैःसृजत्यवतिहन्त्यजः ४० यथाभ्रमरिकादृष्ट्याभ्राम तीवमहीयते चित्तेकर्तरितत्रात्माकर्तेवाहंधियास्मृतः ४१ युवयोरेवनैवायमात्मजोभगवान्हरिः सर्वेषामात्मजोह्यात्मापितामातासईश्वरः ४२ दृष्टंश्रुतंभूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकंच विनाच्युताद्वस्तुतरांनवाच्यंसएवसर्वंपरमार्थभूतः ४३ एवंनिशासाब्रुवतोर्व्यतीतानंदस्यकृष्णानुचरस्यराजन् गोप्यःसमुत्थायनिरूप्यदीपान्वास्तून्समभ्यर्च्यदधीन्य

नेरिमति तत्रचित्तेअहंधियाआत्माध्यासेन आत्माकर्तास्मृतःयथाज्ञानदृष्टेरिति ४१ किंच युवयोरेवनायमात्मजःकिंतुसर्वेषामपितत्रापिनात्मजएवकिंतुपुत्रमित्रादिस्वरूपोपीतिसर्वात्मत्वनिरूपणेनमोहनिरस्यते हेतुःसर्वमेनकोतियुवयोरेवेतिद्वाभ्यां ४२ दृष्टमिति श्रुतादिनावस्तुतरांतदतिरेकेणवस्तुत्वेनवाच्यंनिर्वचनीयंवस्तुनास्तीति ४३ दीपान्निरूप्यप्रज्वाल्यवास्तून्देहल्यादीन् ४४ ॥ ॥

अपि च जानीम एव तत्कथा अपि त्रिवर्गलतानां मूलोन्मूलनीमिति तथापि तत्त्यक्तुं न शक्नुमः किं तर्हि यस्य
यदनुचरितेति यस्यानुचरितमेव लीला तदेव कर्णपीयूषं तस्य विप्रुट्कणिका तस्याः सकृददनेनैव ततो
न विधूता निरस्ता द्वन्द्वधर्मा रागादयो येषां ते अत एव विनष्टा अस्मत्तुल्या दीना दुःखिता इति शेषः गृहकुटुम्बं विहाया
दीना भोगहीना विहंगा अपि भिक्षुचर्यां प्राणाहुतिमात्रं चरन्तीति अतस्त्याज्यापि त्यक्तुं न शक्नुम
इति निद्रापरत्वेऽप्येतावत्प्रोक्तोऽर्थः इत्युज्ज्वलेऽपि परमार्थको यमर्थः विधूतद्वन्द्वधर्म इत्यन्तः समासः सर्वं त्यक्त्वा च
ते च अविनष्टा च सत्तेषु न द्वन्द्वधर्मेणोऽविनष्टा एवं सपदि तन्नाशनमेव दीनं तच्छो गृहकुटुम्बं हित्वा कुटुम्बं विहाय दीना र

यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः सपदि गृहकुटुम्बं दीन
मुत्सृज्य दीना बहव इह विहंगा भिक्षुचर्यां चरन्ति १८ वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः
कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन्
भण्यतामन्यवार्ता १९ ग्रामः ॥

वा किंचनाधीरा इति वा पाठः बहवो विहंगा हंसा इव सारासारविवेकचतुराः भिक्षुचर्यां परमहंस्यं च
रन्ति तस्मादेवं परमपुरुषार्थरूपत्वात् इत्युज्ज्वलकथार्थमिति १८ ननु किमेवं दूषणं वर्णयेव स्माक
रक्षि किमेवं नावोचदित्यत आह वयमिति हे उपमन्त्रिन् दूत आलापमियं वार्ता यतः कुलिकस्य व्याधस्य गी
रुतं गीतं मृगा यथार्तं सत्यमिति श्रद्दधानाः कस्मात्स्वबुद्धिभार्याः हरिण्यः पारैः हताः तस्या हेतोर्दहृशुरेव
क्रियस्य कुटिलस्य वाक्यं तत्सत्यमिव श्रद्दधानाः स्मृत्येत्यो वयमसकृदेतत् ददृशिम कितवस्य नखैः स्प
र्शः तेन तीव्रः स्मररुजः पीडा तस्मात् अन्यवार्ता भण्यतां कथ्यतामिति १९ ग्रामः ॥

श्री॰ भा॰ द॰ मू॰ टी॰ १२५

L75

नन्वात्मनो भूतादिरूपत्वेन दोषप्रसंग इत्यत आह आत्मेति आत्मा तु शुद्धः कुतः ज्ञानमयः गुणात्ययः न गुणेषु स्वेवे
तीति तथा न ततः अतिरिक्तः व्यतिरिक्तः तदपि कुतः ज्ञानमयः ज्ञानस्वरूपः न त्वहंकारवत्स्वयमेव माया
त्मकोऽनात्मवस्थानमिति कुतः शुद्धत्वेतितत्राह गुणेष्विति मायाकार्यमेनान्तमिति भिर्वियुक्तेन मन्त्र आत्महृदय
प्रतीयते न स्वतन्त्रत्वार्थः कुतो मनोनिरोधेन तदभावादिति व्यतिरेके दर्पीतिष्ठितु मनोनिरोधविदितो येनेति
३१ उत्थितः भूमानत्वत्र्यालित्याभिभूतमेवस्वमध्याययति एवं बाधितानपि इन्द्रियार्थान् प्राणादीन् येन म
नसा ध्यायेत ध्यायेद्वेन्द्रियाणि येन प्रतिपद्यते प्रयतात्मनः विनिर्वृत्त अनलस्सः सन्निरुध्यान्नियच्छे

आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ३० आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः सुषु
प्तस्वप्नजाग्रद्भिर्मायावृत्तिभिरीर्यते ३१ येनेन्द्रियार्थान्ध्यायेत मृषा स्वप्नवदुत्थितः तन्निरुध्या
दिन्द्रियाणि विनिद्रः प्रत्यपद्यत ३२ एतदन्तः समाम्नायो योगः सांख्यं मनीषिणाम् त्यागस्त
पो दमः सत्यं समुद्रान्ता इवापगाः ३३ यत्त्वहं भवतीनां वै दूरे वर्ते प्रियो दृशाम् मनसः सन्निक
र्षार्थं मदनुध्यानकाम्यया ३४

दिति तावता च कृतार्थो भवतीत्याह एतदन्त इति एवं मनोनिरोधः अन्तः समाप्तिः फलं यस्य सः समाम्ना
यो वेदः स तत्र पर्यवस्यतीत्यर्थः योगोऽष्टाङ्गः सांख्यमात्मानात्मविवेकः त्यागः संन्यासः तपः स्वधर्मः
दमः इन्द्रियदमनमार्गभेदेऽप्येकत्र पर्यवसाने दृष्टान्तः समुद्रान्ता आपगा नद्य इवेति ३३ ननु किमन्या
निवास्माकमात्मविद्योपलोभयसि वयं तु सर्वं सदस्मकलगुणालंकृतेन त्वया विरहेण वसाम इति
चेत्तत्राह यत्त्वयामिति दूरे यदहं वर्ते तन्मदनुध्यानार्थं तच्च ध्यानेन मनसः सन्निकर्षणामिति ३४ १२५

श्रेयोभिः श्रेयःसाधनैः अनुत्तमा अतिश्रेष्ठा २५ अवृणीत वृतवत्यः २६ सर्वात्मभावः एकान्तभक्तिः अ-
धिकृतः प्राप्तः भगवत्प्रेमप्रवृद्ध्यै ध्यानेन ममैव महाननुग्रहः कृत इति २७ भर्तुः श्रीकृष्णस्य रहस्करः र-
हस्यकार्यकर्ता २८ भवतीनां मया सह वियोगो नास्ति कुतः सर्वात्मना सर्वस्योपादानकारणत्वेन
अतएव सर्वेषु मनआदिकार्येषु अनुगतत्वेन स्थितत्वादिति सदृष्टान्तमाह यथेति भूतेषु चराचरेषु भूता-

दानव्रततपोहोमजपस्वाध्यायसंयमैः श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते २४
भगवत्युत्तमश्लोके भवतीभिरनुत्तमा भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा २५ दि-
ष्ट्या पुत्रान्पतीन्देहान्स्वजनान्भवनानि च हित्वावृणीत यूयं यत्कृष्णाख्यं पुरुषं परं २६ सर्वात्मभा-
वोऽधिकृतो भवतीनामधोक्षजे विरहेण महाभागा महान्मेऽनुग्रहः कृतः २७ श्रूयतां प्रियसंदेशो
भवतीनां सुखावहः यमादायागतो भद्रा अहं भर्तू रहस्करः २८ श्रीभगवानुवाच भवतीनां वि-
योगो मे न हि सर्वात्मना क्वचित् यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही २९ तथाहं च मनःप्रा-
णभूतेन्द्रियगुणाश्रयः आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये ३० ॥ ॥

नि यथा वाय्वग्निः वायुसहितोऽग्निः वायुश्चाग्निश्चेत्यर्थः तथाहं चेति मनआदीनि कार्याणि गुणाः कारणानि ते-
षामाश्रयत्वेनानुगत इत्यर्थः २९ ननु कारणत्वे सर्वानुगतत्वे च कारणान्तरे सर्वानुगतत्वे च कार्यकारणभे-
दः स्यात् अत आह आत्मन्येवेति ननु नित्यसिद्धस्य कुतः तद्रूपतेत्यत आह भूतेन्द्रियगुणात्मनाहं हिंस्येति ।
पाठः तद्रूपेणेति ननु निर्विकारस्य कुतः तद्रूपतेत्यत आह आत्ममाययानुभावेनेति ३० ॥ ॥

एतदुपपादयति त्रिभिः यथा दूरचरइति ३५ उपेष्यथेति सायुज्यमात्रमिति चेदत्राह येति ३६ हे कल्याण्यः
एव स्वभर्तृभिः प्रतिबद्धा यावत्ता क्रीडता मया सह अलब्धक्रीडा अलब्धरासा मामापुः प्रापुः प्रतिबद्धा व्रजे स्थिता
इति पाठः तत्र श्रीकृष्णस्य संदेशानागताः स्मृतिः स्मरणं याभ्यस्ताः प्रीतिमार्याद्वितीया ३८ यदूनामहितः पापः
अपि आह कृतीडः खलु दिष्ट्येति आनंदे आप्तैः आप्तैः हितैर्वा सह ३९ अन्या ऊचुः कथमिति तासां वाक्यैर्विभ्र-

यथा दूरचरे प्रेष्ठे मन आविश्य वर्त्तते स्त्रीणां च न तथा चेतः सन्निकृष्टेक्षगोचरे ३५ मय्यावेश्य म-
नः कृत्स्नं विमुक्ताशेषवृत्ति यत् अनुस्मरंत्यो मां नित्यमचिरान्मामुपैष्यथ ३६ या मया क्रीडि-
ता रात्र्यां वनेस्मिन् व्रज आस्थिताः अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिंतया ३७ शुक उवाच एवं
प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृती ३८ गोप्य ऊचुः दि-
ष्ट्याहितो हतः कंसो यदूनां सानुगोघकृत् दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेच्युतोधुना ३९ कथं
रतिविशेषज्ञः प्रियः स पुरयोषितां नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभाजितः ४० कच्चिद्गदाग्र-
जः सौम्य करोति पुरयोषितां प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ४१ अपि स्मरति नः
साधो गोविंदः प्रस्तुते क्वचित् गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथांतरे ४२ ॥

मैश्चानुभाजितः ४० अन्या ऊचुः कच्चिदिति नोस्माकं करणीयां प्रीतिं पुरयोषितां करोतीति स्निग्धं च तत्
सव्रीडहासेनोदारमीक्षणं तेनार्चितः ताभिः अस्माभिर्वा पुनरन्या ऊचुः किमनया चिंतया अ-
स्मान् कचित्स्मरतीति किं ग्राम्या अविदग्धाः ४२ ॥ ॥

श्री
भा॰ द॰
टी॰
१२०

177

किंच इयं प्रसादो महत्त्वकारणं न स्यवन जातिराचारो ज्ञानं वा कारणं किंतु केवलं भजनमेवेत्याह क्वेमा इति मा
द्यात् भजतः श्रेयः ननु ब्रह्मोपयुक्तः सेवितः अगदराजः अमृतं यथेति ५९ अतोऽतः पूर्वं चायं गोपीषु भगवतः प्र
सादइत्याह नायमिति श्रियोवक्षःस्थितायाअपि नितरामेकान्ततोरतिर्यस्यास्तस्याः श्रियोपि नायं प्रसादः अनुग्रहोस्ति नलिन
स्येवगन्धो रुक्कान्तिश्च यासां स्वर्योषितामप्सरसामपि नास्ति अन्याः पुनर्दूरतो निरस्ताः रासोत्सवे कण्ठस्य भुजदं

क्वेमा स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावाः नन्वीश्वरोनुभजतोविदुषो
पिसाक्षाच्छ्रेयस्तनोत्यगदराजइवोपयुक्तः ५९ नायं श्रियोऽङ्ग उनितान्तरतेः प्रसादः स्वर्योषितां न
लिनगन्धरुचां कुतोन्याः रासोत्सवेस्य भुजदण्डगृहीतकण्ठलब्धाशिषां य उदगाद्व्रजवल्लवीनां ६०
आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनां या दुस्त्यजं स्वजनमा
र्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्यां ६१ या वै श्रियार्चितमजादिभिराप्तकामैर्यो
गेश्वरैरपि यदात्मनि रासगोष्ठ्यां कृष्णस्य तद्भगवतश्चरणारविन्दं न्यस्तं स्तनेषु विजहुः परि
रभ्य तापं ६२ वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः यासां हरिकथोद्गीतं पुनाति भुवनत्रयं ६३

डाभ्यां गृहीत आलिङ्गितः कण्ठः तेन लब्धा आशिषो याभिः तासां गोपीनां यदुदगादाविर्बभव ६० आस्तां
तावद्गोपीनां भाग्यं ममत्वेतावत्प्रार्थ्यमित्याह आसामिति गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यत्कि
मप्यहं स्यां त्यागे साक्षात्प्रभूतानां या इति आर्याणां मार्गं धर्मं च हित्वा ६१ पुनस्ता एव विशिनष्टि या वै इति
योगेश्वरैरपि आत्मनो चिन्तितं तैः स्तनेषु न्यस्तं परिरभ्य तापं जहुरिति ६२ एवं महत्त्वं प्रतिपा
द्य नमस्करोति वन्दे इति ६३ ॥

१२०

हे उद्धव कथं श्रीकृष्णकथां विस्मरामीति ५२ श्रीकृष्णमधोक्षजं ज्ञात्वा तं च स्वात्मानं ज्ञात्वा ५३ विनुदनश्र पनयन् ५४ सरिद्वनगिरिद्रोण्यादिषु प्रत्येकं श्रीकृष्णलीलास्पृष्टादिभिः संस्मारयन् रेमे ५६ श्रीकृष्णावेशेनात्मनो विक्लवं आर्ताः गोपीः नमस्यन् नमस्कुर्वन् उत्तमनो गोपस्त्रीनमस्कृतिरप्यनुचिता न भवतीति दर्शयितुं तासां महत्त्वं पंचभिर्जगौ उवाच ५७ एता इति एताः परं केवलं तनुभृतः सफलजन्मानः रूढभावाः

पुनः पुनः स्मारयन्ति नन्दगोपसुतं बत। श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ५० गत्या ललितयो
दारहासलीलावलोकनैः। माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ५१ हे नाथ हे रमानाथ व्रजनाथा
र्तिनाशन। मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवात् ५२ श्रीशुक उवाच ततस्ताः कृष्णसन्देशैर्व्यपे
तविरहज्वराः। उद्धवं पूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजं ५३ उवास कतिचिन्मासान् गोपीनां विनुदन्
शुचः। कृष्णलीलाकथां गायन् रमयामास गोकुलं ५४ यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत्स उद्धवः।
व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ५५ सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान्। कृ
ष्णं संस्मारयन् रेमे हरिदासो व्रजौकसां ५६ दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवं। उद्धवः परम
प्रीतस्ता नमस्यन्निदं जगौ ५७ उद्धव उवाच एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्म
नि रूढभावाः। वाञ्छन्ति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य ५८ ॥ ॥

परमप्रेमवत्यः यदिति यद्रूढभावं भवभियो मुमुक्षवः मुनयो मुक्ताश्च अपि वाञ्छन्ति वयं भक्ता अपि अतः अनंतस्य कथारसरागो यस्य तस्य ब्रह्मजन्मभिः विप्रशौक्रसावित्रयाज्ञिकैः त्रिभिर्जन्मभिः किं कोऽतिशयस्तन्न
नः सर्वं सर्वेतमः इत्यर्थः यद्वा अनंतकथाहरगो यस्य तस्य ब्रह्मजन्मभिः चतुर्मुखजन्म
भिः अपि किमित्यर्थः ५८ ॥ ॥

अनुज्ञाप्य अनुज्ञां प्राप्य आमंत्र्य पृष्ट्वा ६४ अस्माकं मनसो वृत्तयः कृष्णपादांबुजाश्रयाः स्युः अभिधायिनीः अ
भिधायिन्यः ६६ कृष्णे रतिः स्यादिति ६७ ६८ नंदादीनां श्रीकृष्णादिभ्यो भक्त्युद्रेकमाह उपायनानि चाऽदादिति ६
तिश्रीभावार्थदीपिकायांदशमस्कंधेसप्तचत्वारिंशोऽध्यायः ४७ अष्टचत्वारिंशके प्रकाशः कुब्जामंदिरं गतः अक्रूरस्य गृहं गत्वा तेग

श्रीशुकउवाच अथगोपीरनुज्ञाप्ययशोदांनंदमेवच गोपानामंत्र्यदाशार्होयास्यन्नारुरुहेरथं ६४ तं
निर्गतंसमासाद्यनानोपायनपाणयः नंदादयोनुरागेणप्रावोचन्नश्रुलोचनाः ६५ मनसोवृत्तयो
नःस्युःकृष्णपादांबुजाश्रयाः वाचोभिधायिनीर्नाम्नांकायस्तत्प्रह्वणादिषु ६६ कर्मभिर्भ्राम्यमाणानां
यत्रक्वापीश्वरेच्छया मंगलाचरितैर्दानैरतिर्नःकृष्णईश्वरे ६७ एवंसभाजितोगोपैःकृष्णभक्त्यानरा
धिप उद्धवःपुनरागच्छन्मथुरांकृष्णपालितां ६८ कृष्णायप्रणिपत्याहभक्त्युद्रेकंव्रजौकसां वसु
देवायरामायराज्ञेचोपायनान्यदात् ६९ इतिश्रीभागवतेदशमस्कंधेसप्तचत्वारिंशोऽध्यायः
४७ शुकउवाच अथविज्ञायभगवान्सर्वात्मासर्वदर्शनः सैरंध्र्याःकामतप्तायाःप्रियमिच्छन्गृहंय
यौ १ महार्होपस्करैराढ्यंकामोपायोपबृंहितं मुक्तादामपताकाभिर्वितानशयनासनैः २ गृह
तमायांतमवेक्ष्यसासनासद्यःसमुत्थायहिजातसंभ्रमाः यथोपसंगम्यसखीभिरच्युतंसभाजयामा
ससदासनादिभिः ३ तथोद्धवःसाधुतयाभिपूजितोन्यषीदुर्व्यामभिमृश्यचासनं कृष्णोपि
तूर्णंशयनंमहाधनंविवेशलोकाचरितान्यनुव्रतः ४ ॥ ॥

जाह्नेयमादिशत् सैरंध्रीकाममापूर्यप्रार्थितामनोरथम् अक्रूरस्यततःकृष्णःतेनपार्थानमोदयत् महा
र्हैःरत्नैःउपस्करैःमहोपकरणैराढ्यमिति कामोपायैःतद्दीपकैःस्रगादिभिःसर्वथादिलेपैःउपबृंहितं यथायथा



भा० द० ३५६

श्री०
भा०टी०
दू०टी०
१२४

179

किंचास्तो नावनबन्धोऽथन साक्षायतो विद्योपादे जीवात्मन्येपि नबन्धो नेवमोक्षोस्तीति आह देहाद्युपाधेरिति भवो
जन्मतन्मूला भिदा साक्षादात्मस्वरूपतो नस्यादिति ननु तर्ह्येविधाभेदबन्धायाकिंमोक्षोनीहतः सोमितिचेन्नहि वा
धाभावात्तथत्वे बन्धोपीत्याह अतोत्र अतस्मिन्यतो न अविद्या अतो न बन्धो न मोक्षश्च एवमुभौ न स्यातामित्य
र्थः ननु बन्धविवेकमोक्षयोरज्ञानवान्ये जनाः इदं तेषु ज्ञानादृष्टवानभिन्नत्वात् कथं भ्रमेणनाल्पतम आह निका
मइति अतिशये साक्षात्मभिप्रायात्तद्रूपः त्वयनेमास्माकं अविवेकएवपरमेवेभ्रान्तइतियद्वानः अविवेकएव

देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदात्मनः स्यात् अतो न बन्धस्तव नैव मोक्षः स्यातान्नि
कामस्त्वयि नोऽविवेकः २२ त्वयोदितोयं जगतो हिताय यदा यदा वेदपथः पुराणः बाध्येत पा
षण्डपथैरसद्भिस्तदा भवान्सत्त्वगुणं बिभर्ति २३ स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमप
नेतुमिहासि भूमेः अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन् २४
अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः यत्पादशौचसलिलं त्रिजगत्पु
नाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः २५ ॥ ॥

तवोभौ न स्यातामिति २२ ननु तर्हि रामावताराम चरितानि च युक्तानि तत्राह अविद्याकल्पितान्येव किंत
र्हि तेन हि स्थैर्येत्तत्त्वलीलेत्याह त्वयेन त्वयोदितइति सत्त्वं ग्राणायेस राजानः तेषामक्षौहिणीशतानां वधेन भूभार
मपनेतुं सोयानस्ये महावतीर्णोऽसीति २४ अतएवं भूतस्य तव आगमनेन कृतार्थोस्मीत्याह अद्येश
अचितेः पात्र अपनोवसतयो गृहा नेयोवनादपिबहु पुण्याः कृताः यावता ते साक्षात्प्रविष्टाः कथंभूतः य
स्य तवपादजलिलमेव गंगा त्रिजगत्पुनाति अतएव पंचयन्नदेवतामूर्तिः सत्वं जगद्गुरुरिति २५ ॥ ॥ १२४

वां गुणयोः कृत्स्नमिदं प्रहृत्तेऽसमर्पितं च १२ वां इदं कृत्स्नमित्यादि व्यवहारदृष्ट्योक्त्वा परमार्थमाह गुणा इति ज
गन्मयो गुणवान्कृतः जगद्धेतुः तदपि कृतः प्रधानपुरुषौ तदात्मको भवानेव भवतो विना परं कारणं कार्यं च नास्ती
ति १३ ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यते अत आह आत्मन्ह्येतत् इति हे ब्रह्मन् अयं प्रपञ्च इति वा पाठः रज
आदिशक्तिभिः आत्मनैव सृष्टमिदं विश्वमत्वा विषय कारणत्वात् अनुप्रविष्टोऽपि अप्रविष्ट एव स्थितः आत्मा
त्वन्तगोचरे यथा भवति तथा बहुधा भवानेव प्रतीयते १४ एकस्यैव बहुधा प्रतीतिस्सदृष्टान्तमाह यथा हीति

अर्चितोऽस्मि त्वया पूर्वं भवेऽस्मिन् ... अर्जुन ... अक्रूर उवाच
दिष्ट्या पापो हतः कंसः सानुगो वामिदं कृत्स्नम् भवद्भ्यां ... समर्पितम् १२ गुणप्र
धानपुरुषौ जगद्धेतू जगन्मयौ भवद्भ्यां न विना किञ्चित्परमस्ति न चापरम् १३ आत्मसृष्टमिदं
विश्वमन्वाविश्य स्वशक्तिभिः ईयते बहुधा ब्रह्मन् श्रुतप्रत्यक्षगोचरं १४ यथा हि भूतेषु चराचरे
षु मह्यादयो योनिषु भान्ति नाना एवं भवान्केवल आत्मयोनिष्वात्मात्मतंत्रो बहुधा विभाति २१ सृ
जस्यथो लुम्पसि पासि विश्वं रजस्तमः सत्त्वगुणैः स्वशक्तिभिः न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते

योनिषु स्वस्यैव रूपान्तरेण अभिव्यक्तिस्थानेषु चराचरेषु भूतेषु प्राणमहीप्रभृतीनि कारणान्येव नाना भान्ति
आत्मयोनिषु स्वकारणेषु भूतभौतिकेषु जीवोऽपि नरमृगादिशरीरेषु बाल्यवृद्धाद्यवस्था भवन्ता
तथा प्रतीयते इति तद्वाक्यैर्वार्थमात्मतंत्रः स्वतंत्रः हरणम् २ ननु सृष्ट्यादिकर्तृत्वेन सगुणत्वेन च ममकिं जीव
वद्बन्धः नहि न हीत्याह सृजसीति तत्तद्गुणकर्मभिर्वेत्यर्थः यतः क्वचित्कदाचिदपि बंधहेतुरविद्या
ज्ञानत्वेनैवास्ति अतः सूत्यते आह ज्ञानात्मन इति मायया आत्माश्रया या वा वरकत्वादिति भावः २२ ॥ ॥

४८

